Digitized By Siddhanta eGangotri Gyaan Kosha

33,928
25-3-50

# KUSUMAMALA

OR

## A Collection of Choice Extracts from Standard Sanskrit Writers

## IN PROSE AND VERSE.

---

### NO. 1.

DESIGNED FOR STUDENTS LEARNING THE SIXTH STANDARD IN HIGH SCHOOLS

**WITH FULL EXPLANATORY NOTES.**

BY

***VAMAN SHIVRAM APTE,*** *M. A.,*
*Late Principal, Fergusson College, Poona.*

---

FOURTEENTH EDITION.

---

**THOROUGHLY REVISED**

BY

***MAHADEV SHIVRAM APTE,*** *B. A.,*
*Retired Head Master, Satara High School.*

---

**1924.**

(*All rig*... *thor.*)

पुस्तकालय
गुरुकुल कांगड़ी

पुस्तक मिलने का पता:
साहित्य भवन लिमिटेड
इलाहाबाद

870,184(1)
33914

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# PREFACE.

The following pages have been intended to serve as a reading book for Sanskrit students learning the sixth standard in High schools. They contain 37 extracts taken from the well-known works of some of the renowned standard Sanskrit writers, such as Valmiki, Vyasa, Kalidas, Vishnusarman &c. The extracts are intended to give the student specimens of different styles and modes of thought and will be found to display a variety of forms, descriptive, moral, narrative, epic, dramatic etc. It has not been thought advisable to make room in this number of any extracts from works like the Dasakumaracharit, Megha-duta, Uttararamacharit, etc., as they would be found difficult by the average student of the sixth standard in High Schools. Each extract has an intelligible beginning and an end, the subject treated therein being given in English at the commencement, and its source at the end. In selecting passages from different works I have had to abridge or condense them in several cases by leaving out single words or long compounds, or even several sentences or verses, where the omission could be made without impairing the beauty of the original or affecting the context. It was found necessary to do so to prevent the extracts from being needlessly long but in some cases even the passages so condensed became rather lengthy, and have, therefore, been divided into parts.

The extracts have been divided into two Series, each Series being expected to be read in the class during one

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


year. An attempt has been made to arrange the extracts in each Series progressively, but the order may in some cases, have to be changed in a subsequent edition, if they be found to be too easy or difficult where they are at present. The passages in prose and verse are almost alternate and miscellaneous verses have been added at the end of each Series, being intended to be learnt by heart by the student, and they may be read side by side with the preceding extracts. The miscellaneous verses at the end of the first Series have, with some omissions, been taken from "the Students Hand Book of Progressive Exersises, Part 1, as they were found to be of no great use to students in that book. In adapting stories as in the acquisition of friends ( p. 12 ), How Dasaratha was cursed ( p. 46 ), or the righteous King of Sibis ( p. 52 ), I have tried to retain, as far as possible the language of the original, making changes only where absolutely necessary. Words and expressions, such as were considered likely to present some difficulty to the average students, have been explained in the notes but mere words have not been given, as Sanskrit English Dictionaries have now become available to even the poorest. Thus the book is intended to supply the want of a Sanskrit reading-book hither-to felt by students learning the sixth standard in High schools, and will, I hope, give them some familiarity with the styles and modes of thought of some of the most distinguished Sanskrit writers.

Any suggestions as to improvements &c. will be thankfully received.

POONA,
*3rd November 1891.* } V. S. APTE

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# PREFACE TO THE SECOND EDITION.

In giving this 2nd edition to the public the extracts have been carefully revised, one or two that were found to be difficult for the students for whom they were intended being removed and easier ones substituted for them.

A few more explanatory notes on points found to be difficult have been added.

It is hoped that the Sanskrit reading public will extend their patronage to this edition as it did to the first.

DHULIA,
*31—10—1894.* } M. S. APTE.

---

# PREFACE TO THE FOURTEENTH EDITION.

This is a mere reprint of the thirteenth Edition.

DHULIA,
*15th August 1924.* } M. S. APTE.

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# CONTENTS.

——:o:——

## FIRST SERIES.



## SECOND SERIES.



CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha





## EXPLANATORY NOTES.



CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# कुसुममाला.

## प्रथमावलिः

### 1.

### INTELLIGENCE IS BETTER THAN LEARNING.

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परं मित्रभावमुपगता वसन्ति स्म। तेषां त्रयः शास्त्रपारं गताः परन्तु बुद्धिरहिताः। एकस्तु बुद्धिमान्केवलं शास्त्रपराङ्मुखः। अथ तैः कदाचिन्मित्रैर्मन्त्रितम्। को गुणो विद्याया येन देशान्तरं गत्वा भूपतीन्परितोष्यार्थोपार्जना न क्रियते। तत्पूर्वदेशं गच्छामः। तथानुष्ठिते कश्चिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह। अहो अस्माकमेकश्चतुर्थो मूढः केवलं बुद्धिमान्। न च राजप्रतिग्रहो बुद्ध्या लभ्यते विद्यां विना। तन्नास्मै स्वोपार्जितं दास्यामि। तद्गच्छतु गृहम्। ततो द्वितीयेनाभिहितम्। भोः सुबुद्धे गच्छ त्वं स्वगृहं यतस्ते विद्या नास्ति। ततस्तृतीयेनाभिहितम्। अहो न युज्यत एवं कर्तुं यतो वयं बाल्यात्प्रभृत्येकत्र क्रीडिताः। तदागच्छतु महानुभावोस्मदुपार्जित वित्तस्य संविभागी भविष्यतीति। तदागच्छत्वेषोपीति। तथानुष्ठिते तैर्मार्गाश्रितैरटव्यां मृतसिंहस्यास्थीनि दृष्टानि। ततश्चैकेनाभिहितम्। यदहो विद्याप्रत्ययः क्रियते। किञ्चिदेतत्सत्त्वं मृतं तिष्ठति। तद्विद्याप्रभावेण जीवसहितं कुर्मः। अहमास्थिसञ्चयं करोमि। ततश्चैकेनौत्सुक्यादस्थिसञ्चयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोपि यावज्जीवं संचारयति

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



तावत्सुबुद्धिना निषिद्धः । भोस्तिष्ठतु भवान् । एष सिंहो निष्पाद्यते । यद्येनं सजीवं करिष्यसि ततः सर्वानपि व्यापादयिष्यति । इति तेनाभिहितः स आह । धिङ्मूर्ख नाहं विद्याया विफलतां करोमि । ततस्तेनाभिहितम् । तर्हि प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि । तथानुष्ठिते यावत्सजीवः कृतस्तावत्ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः । स च पुनर्वृक्षादवतीर्य गृहं गतः । अतोऽहं ब्रवीमि ।

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा ।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥ १ ॥

Panchatantra, V.

---

## II.

## THE CURIOUS YOGIN.

अथ पुनरानीयमानो वेतालः कथामपरां कथयति । देव कलिङ्गविषये यज्ञस्थलनामधेयं नगरमासीत् । तत्र यज्ञसोमनामा ब्राह्मणस्तिष्ठति तस्य ब्राह्मणी सोमदत्ता । तस्यामनेन ब्रह्मस्वामी नाम पुत्र उत्पादितः । स च सर्वशास्त्रतत्त्वज्ञो भूत्वा दैववशात् पञ्चत्वमगात् । ततस्तात्पितरौ बहुविधं विलपन्तौ बन्धुजनसहितौ तमादाय श्मशाने संस्कारार्थमाजग्मतुः । इत्येव काले श्मशानवासी योगी तं द्विजकुमारशरीरं सर्वशास्त्रवेत्तारं मनोहरकलेवरमालोक्य करुणस्वरेणोच्चैः क्रन्दितवान् परमकौतुकेन नर्तितवांश्च । सहसोत्थाय योगेन जीर्णशरीरं परित्यज्य मृतस्य द्विजकुमारस्य शरीरे प्रविवेश । कुमारे सुप्तोत्थिते तत्पितरौ परां प्रीतिमासादितवन्तौ । सर्वे बन्धुवर्गाश्च हर्षिता बभूवुः । ब्रह्मस्वामी प्राप्तजीवनः सर्वभोगं परित्यज्य योगं ध्यायंस्तस्थौ । श्मशानवासी योगी कथं वा चक्रन्द कथं वा ननर्त तत्कारणं वदतु देवः । राजा वदति । शृणु रे वेताल । चिरकालमुपार्जितं शरीरं त्यक्तव्य-

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


मिति चक्रन्द जीर्णं शरीरं विहाय सर्वगुणाधारद्विजशरीरं प्राप्तव्यमिति ननर्त ।

Vetalapanchavimsati.

---

III.

## THE FOUR LEARNED FOOLS.

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म । बालभावे तेषां मतिरजायत । भो देशान्तरं गत्वा विद्याया उपार्जनं क्रियते । अथान्यस्मिन्दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जं गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशाब्दानि यावदेकचित्ततया विद्याकुशलास्ते सर्वे सञ्जाताः । ततस्तैश्चतुर्भिर्मिलित्वोक्तम् । वयं सर्वविद्यापारं गताः तदुपाध्यायमुत्कलापयित्वा स्वदेशं गच्छामः । तथैव क्रियतामित्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः । यावत्किञ्चिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ । उपविष्टाः सर्वे । तत्रैकः प्रोवाच । केन मार्गेण गच्छामः । एतस्मिन्समये तस्मिन्पत्तने कश्चिद्वणिक्पुत्रो मृतः । तस्य दाहार्थं महाजनो गतोभूत् । ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम् । ‘ महाजनो येन गतः स पन्था ’ इति तन्महाजनमार्गेण गच्छामः । अथ ते पंडिता यावन्महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित्तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम् ।

> आतुरे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे ।
> राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ १ ॥

तदहो अयमस्मदीयो बान्धवः । ततः कश्चित्तस्य ग्रीवायां लगति । कोपि पादौ प्रक्षालयति । अथ यावद्दिशामवलोकनं ते पण्डिताः कुर्वन्ति तावत्कश्चिदुष्ट्रो दृष्टः । तैश्चोक्तम् । एतत्किम् । तावत्तृतीयेन पुस्तकमुद्घाट्योक्तम् । ‘ धर्मस्य त्वरिता गतिः ’ ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



एष धर्मस्तावत् । चतुर्थेनोक्तम् । इष्टं धर्मेण योजयेत् । अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः । केनचिद्रजकस्याग्रे कथितम् । यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते प्रनष्टाः । यावदग्रे किञ्चित्स्तोकं मार्गं यान्ति तावत्काचिन्नद्यासादिता । तत्तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनकेनोक्तम् । आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति । एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्ते गृहीत्वोक्तम् ।

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥ २ ॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः । अथ तैश्च पश्चाद्गत्वा कश्चिद् ग्राम आसादितः । तेपि ग्रामीणैर्निमान्त्रिताः पृथक् पृथग्गृहेषु नीताः । तत एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता । ततो विचिन्त्य पण्डितेनोक्तम् । यद्दीर्घसूत्री विनश्यति । एवमुक्त्वा भोजनं परित्यज्य गतः । तथा द्वितीयस्य मण्डका दत्ताः । तेनाप्युक्तम् । अतिविस्तरविस्तीर्णं न तद्भवेच्चिरायुषम् । स च भोजनं त्यक्त्वा गतः । अथ तृतीयस्य वटिकाभोजनं दत्तम् । तत्रापि पण्डितेनोक्तम् । छिद्रेष्वनर्था बहुलीभवन्ति । एवं ते त्रयोपि पण्डिताः क्षुत्क्षामकण्ठा लोकैर्हस्यमानास्ततः स्थानात्स्वदेशं गताः । अतोहं ब्रवीमि ।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ३ ॥

Panchatantra V.

---

## IV.

## GENERAL PRECEPTS

मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ १ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


रूपयौवनसंपन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ २ ॥
नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ३ ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥ ४ ॥
लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरेत् ॥ ५ ॥
लालने बहवो दोषास्ताडने बहवो गुणाः ।
तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ६ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ ७ ॥
एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥ ८ ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ९ ॥
विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १० ॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ११ ॥
जानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे ।
मित्रं चापदि काले च भार्यां च विभवक्षये ॥ १२ ॥
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ १३ ॥
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा ॥ १४ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥ १५ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः ।
मन्त्रौषधिवशः सर्पः खलः केन निवार्यते ॥ १६ ॥

Chanakyasataka.

---

## V.
## THE SERPENT AND THE FROG.

अस्ति कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म । स कदाचिद्दायादैरुद्वेजितोऽरघट्टघटीमारुह्य निष्क्रान्तः । अथ तेन चिन्तितम् । यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्तव्यः । एवं चिन्तयन्बिले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोप्यचिन्तयत् । यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि । उक्तं च

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ॥
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥ १ ॥

स एवं परिभाव्य बिलद्वारं गत्वा तमाहूतवान् । एह्येहि प्रियदर्शन एहि । तच्छ्रुत्वा सर्पश्चिन्तयामास । एष मामाह्वयति । असौ स्वजात्यो न भवति यतो नैषा सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके सन्धानं नास्ति । तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोयं भविष्यति । आः कदाचित्कोऽपि मन्त्रवाद्यौषधिधरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थं मामाह्वयति । आह च । भोः को भवान् । स आह । अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशं मैत्र्यर्थमागतः । तच्छ्रुत्वा सर्प आह भो अश्रद्धेयमेतद्यत्तृणानां वह्निना सह संगमः । गङ्गदत्त आह । भोः सत्यमेतत् स्वभाववैरी त्वमस्माकम् । परं परपरिभवात्प्राप्तोहं ते सकाशम् । सर्प आह । कथय कस्मात्ते परिभवः । स आह । दायादेभ्यः । सोप्याह । क्व त आश्रयो वाप्यां कूपे तडागे ह्रदे वा । तत्कथय स्वाश्रयम् । तेनोक्तम् । पाषाण-

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


चयनिबद्धे कूपे । सर्प आह । अहो अपदा वयम् । तर्हि नास्ति मम तत्र प्रवेशः । प्रविष्टस्य च तत्र स्थानं नास्ति यत्र स्थितस्तव दायादान्व्यापादयामि । तद्गम्यताम् । गङ्गदत्त आह । भोः समागच्छ त्वम् । अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति । तत्र स्थितस्त्वं लीलया दायादान्व्यापादयिष्यसि । तच्छ्रुत्वा सर्पो व्यचिन्तयत् । अहं तावत्परिणतवयाः । कदाचित्कथंचिन्मूषकमेकं प्राप्नोमि । तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः । तद्गत्वा तान्मण्डूकान्भक्षयामीति । एवं विचिन्त्य तमाह । भो गङ्गदत्त यद्येवं तदग्रे भव येनागच्छामि । गङ्गदत्त आह । भोः प्रियदर्शन अहं त्वां सुखोपायेन तत्र नेष्यामि स्थानं च दर्शयामि । परं त्वयास्मत्परिजनो रक्षणीयः केवलं यानहं दर्शयामि त्वया त एव भक्षणीया इति । सर्प आह साम्प्रतं त्वं मे मित्रं जातः । तन्न भेतव्यम् । तव वचनेन भक्षणीयास्ते दायादाः । एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः । ते च तेन शनैर्भक्षिताः । अथ मण्डूकाभावे सर्पेणाभिहितम् । भद्र निःशेषितास्ते रिपवस्तत्प्रयच्छान्यन्मे किञ्चिद्भोजनं यतोऽहं त्वयात्रानीतः । गङ्गदत्त आह । भद्र कृतं त्वया मित्रकृत्यम् । तत्साम्प्रतमनेनैव घटिकायन्त्रमार्गेण गम्यतामिति । सर्प आह । गङ्गदत्त न सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि । मदीयबिलदुर्गमन्येन निरुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ नो चेत्सर्वानपि भक्षयिष्यामीति । तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत् । अहो किमेतन्मया कृतं सर्पमानयता । तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । एवं निश्चित्य नित्यमेकैकमादिशति । सोऽपि तं भक्षयित्वा तस्य परोक्षेन्यानपि भक्षयति । अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतः

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

पृथुदत्तो भक्षितः। तं भक्षितं मत्वा गङ्गदत्तस्तारस्वरेण धिग्धिक्-प्रलापपरः कथञ्चिदपि न विरराम। ततः पत्न्याभिहितः।

किं क्रन्दसि दुराक्रन्द स्वपक्षक्षयकारक।
स्वपक्षस्य क्षये जाते त्वत्त्राणं कः करिष्यति॥ २॥

तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणमस्य वधोपायश्च। अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम्। केवलमेको गंगदत्तास्तिष्ठति। ततः प्रियदर्शनेन भणितम् भो गङ्गदत्त बुभुक्षितोऽहम्। निःशेषिताः सर्वे मण्डूकाः। तद्दीयतां मे किंचिद्भोजनं यतोऽहं त्वयात्रानीतः। स आह। भो मित्र न त्वयात्र विषये मय्यवस्थिते कापि चिन्ता कार्या। तद्यदि मां प्रेषयसि ततोऽन्यकूपकानामपि मण्डूकानाश्वास्यात्रानयामि। स आह। मम तावत्त्वमभक्ष्यो भ्रातृस्थाने। तद्येद्येवं करोषि तत्साम्प्रतं पितृस्थाने भवसि। तदेवं क्रियतामिति। सोऽपि तदाकर्ण्यारघट्टघटिकामाश्रित्य विविधदेवतोपकल्पितोपयाचितोऽस्मात्कूपाद्बहिर्निष्क्रान्तः। प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति। अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच। भद्रे क्रियतां स्तोकं साहाय्यम्। त्वया सह परिचितमास्ते। तद्गत्वा मण्डूकमन्विष्य क्वचिज्जलाशये गङ्गदत्ताय मम सन्देशं कथय। येनागम्यतामेकाकिनापि द्रुततरं यद्यन्ये मण्डूका नागच्छन्ति। अहं त्वया विना नात्र वस्तुं शक्नोमि। तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम्। गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह। भद्र गङ्गदत्त स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति। तच्छीघ्रं गम्यताम्। अपरं च तेन तव विरूपकरणे सुकृतमन्तरे धृतम्। तन्निःशङ्केन मनसा गम्यताम्। तदाकर्ण्य गङ्गदत्त आह।

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति।
आख्याहि भद्रे प्रियदर्शनस्य

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


न गङ्गदत्तः पुनरेति कूपम् ॥ ३ ॥

एवमुक्त्वा स तां विसर्जयामास ।

Panchatantra IV.

---

## VI

## THE TIGER AND THE POOR TRAVELLER.

अहमेकदा दक्षिणारण्ये चरन्नपश्यम् । एको वृद्धव्याघ्रः स्नातः सरस्तीरे ब्रूते । भो भोः पान्था इदं सुवर्णकङ्कणं गृह्यताम् । ततो लोभाकृष्टेन केनचित्पान्थेनालोचितम् । भाग्येनैतत्सम्भवति । किन्त्वस्मिन्नात्मसन्देहे प्रवृत्तिर्न विधेया । अथवा सर्वत्रार्थार्जने प्रवृत्तिः ससन्देहैव । तथा चोक्तम् ।

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ १ ॥

तन्निरूपयामि तावत् । प्रकाशं ब्रूते । कुत्र तव कङ्कणम् । व्याघ्रो हस्त प्रसार्य दर्शयति । पान्थोवदत् कथं मारात्मके त्वयि विश्वासः । व्याघ्र उवाच । शृणु रे पान्थ प्रागेव यौवनदशायामतिदुर्वृत्त आसम् । अनेकगोमानुषाणां वधान्मे पुत्रा मृता दाराश्च वंशहीनश्चाहम् । ततः केनचिद्धार्मिकेणाहमादिष्टः दानधर्मादिकं चरतु भवान् । तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो न कथं विश्वासभूमिः । मम चैतावाँल्लोभविरहो येन स्वहस्तस्थमपि सुवर्णकङ्कणं यस्मैकस्मैचिद्दातुमिच्छामि । तथापि व्याघ्रो मानुषं खादतीति लोकापवादो दुर्निवारः । मया च धर्मशास्त्राण्यधीतानि । शृणु–

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा ।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन ॥ २ ॥
प्राणा यथात्मनोभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ३ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


त्वं चातीव दुर्गतस्तेनैतत्तुभ्यं दातुं सयत्नोहम् ।
तथा चोक्तम् ।

दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ ४ ॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणं गृहाण। ततो यावदसौ तद्वचः प्रतीतो लोभात्सरः स्नातुं प्रविशति तावन्महापङ्के निमग्नः पलायितुमक्षमः । पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत् । अहह महापङ्के पतितोसि । अतस्त्वामहमुत्थापयामि । इत्युक्त्वा शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोचिन्तयत् ।

न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः ॥ ५ ॥

तन्मया भद्रं न कृतं यदत्र मारात्मके विश्वासः कृतः ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ ६ ॥

इति चिन्तयन्नेवासौ व्याघ्रेण व्यापादितः खादितश्च ।
अतोहं ब्रवीमि ।

कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे ।
वृद्धव्याघ्रेण सम्प्राप्तः पथिकः स मृतो यथा ॥ ७ ॥

Hitopadesa.

---

## VII
## RAMA DISSUADING SITA FROM HER RESOLVE.

स एवं ब्रुवतीं सीतां धर्मज्ञां धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥
सान्त्वयित्वा ततस्तां तु बाष्पदूषितलोचनाम्

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥
सीते महाकुलीनासि धर्मे च निरता सदा ।
इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ ३ ॥
सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाबले ।
वने दोषा हि बहवो वसतस्तान्निबोध मे ॥ ४ ॥
सीते विमुच्यतामेषा वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥
हितबुद्ध्या खलु वचो मयैतदभिधीयते ।
सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥
गिरिनिर्झरसम्भूता गिरिनिर्दरिवासिनाम् ।
सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥
क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये तथा मृगाः ।
दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनम् ॥ ८ ॥
सग्राहाः सरितश्चैव पंकवत्यस्तु दुस्तराः ।
मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९ ॥
लताकण्टकसंकीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सुदुःखाश्च मार्गा दुःखमतो वनम् ॥ १० ॥
सुप्यते पर्णशय्यासु स्वयं भग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद् दुःखमतो वनम् ॥ ११ ॥
अहोरात्रं च सन्तोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ १२ ॥
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ।
जटाभारश्च कर्तव्यो वल्कलाम्बरधारणम् ॥ १३ ॥
देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४ ॥
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद् दुःखतरं वनम् ॥ १५ ॥
उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


आर्षेण विधिना वेद्यां सीते दुःखमतो वनम् ॥ १६ ॥
यथालब्धेन कर्तव्यः संतोषस्तेन मैथिलि ।
यथाहारैर्वनचरैः सीते दुःखमतो वनम् ॥ १७ ॥
अतीव वातास्तिमिरं बुभुक्षा चास्ति नित्यशः ।
भयानि च महान्त्यत्र अतो दुःखतरं वनम् ॥ १८ ॥
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ।
चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥
नदीनिलयनाः सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनम् ॥ २० ॥
पतंगा वृश्चिकाः कीटा दंशाश्च मशकैः सह ।
बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥ २१ ॥
द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि ।
वने व्याकुलशाखाग्रास्तेन दुःखमतो वनम् ॥ २२ ॥
कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दुःखमेव सदा वनम् ॥ २३ ॥
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये दुःखं नित्यमतो वनम् ॥ २४ ॥
तदलं ते वनं गत्वा क्षेमं न हि वनं तव ।
विमृशन्निव पश्यामि बहुदोषकरं वनम् ॥ २५ ॥

Ramayana.

---

## VIII
## The acquisition of friends.
### Part 1.

आसीत्कस्मिंश्चिद्वनोद्देशे महाञ् शाल्मलीतरुः । तत्रैको लघुपातीति कृतनामधेयो वायसः कृतनिलयस्तस्थौ । स कदाचित्स्वनीडस्थस्तरोरधस्ताज्जालहस्तं सलगुडं रौद्रमेकं पुरुषमैक्षत । ततस्तं यावत्स काको वीक्षते तावत्स जालं वितत्य भुवि तण्डुला-

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


न्विकीर्य प्रच्छन्नोभवत्। अत्रान्तरे चित्रग्रीवनामा कपोतपतिः परिवारशतैर्वृतो भ्रमंस्तत्राजगाम। स तु तांस्तण्डुलान्पतितान् दृष्ट्वा भोजनलिप्सया सवर्गः पतितो जाले शाकुनिके बद्धोभवत्। तद् दृष्ट्वैव कपोतराजः सर्वाननुचराञ् जगाद। भद्राश्चञ्चुभिर्जालं गृहीत्वा सर्वे समकालमुत्पतत सवेगम्। ततस्ते भीताः कपोताः सर्वे तथेति जालमादाय वेगतः समुत्पत्य नभसा गन्तुं प्रचक्रमिरे। सोपि दृष्ट्वोर्ध्वदृष्टिः समुद्विग्नो लुब्धकः सन्न्यवर्तत। अथ निर्भयश्चित्रग्रीवस्ताननुयायिनः कपोतानब्रवीत्। भो मित्रस्य मे हिरण्यकस्य मूषिकस्य सकाशं व्रजामः। स एवास्माकं पाशानेतान् समुच्छेत्स्यति। इत्युक्त्वा सोऽनुगैः कपोतैर्जालकर्षिभिः समेतः सत्वरं तस्य मूषिकस्य बिलद्वारं प्राप्य नभसः समवततार। भो मित्र हिरण्यक निर्याहि मित्रमहं ते चित्रग्रीवः समायातः। इत्थं स कपोतपतिस्तं मूषकमाजुहाव। सोपि मूषको हिरण्यको द्वारमार्गेणागतं तं सुहृदं दृष्ट्वा ससम्भ्रमं तस्माच्छतमुखाद्बिलान्निर्ययौ। सत्वरं समुपेत्य च तं वृत्तान्तं पृष्ट्वा तस्य सानुगस्य पारावताधीशस्य पाशानच्छिनत्। अथ छिन्नपाशः स कपोतराजोनुगैः सह तं मूषकमामन्त्र्य स्वस्थानं ययौ। स तु लघुपाती वायसोन्वागतः सर्वं तद् वृत्तं विलोक्य बिलप्रविष्टं तं मूषकमागत्यावदत्। भद्र हिरण्यकोहं लघुपाती नाम काकस्त्वां मित्रवत्सलं विपन्नमित्रविपदुद्धरणक्षमं दृष्ट्वा मित्रं कर्तुमागतः। तदाकर्ण्य विवराद्वायसं दृष्ट्वासौ मूषकः प्रत्यभाषत। गच्छ का मैत्री भक्ष्यभक्षकयोरिति। ततो वायस उवाच। शान्तं पापम् त्वयि भुक्ते मम क्षणिका प्रीतिः, जीविते तु चिरं जीवनरक्षा ममेति। एवं बहूक्त्वा शपथं समाश्वासं च कृत्वा व्याकुलः स वायसो निर्गतेन तेनाखुना मित्रभावमाधिरोपितः। स चाखुर्मांसपेशीः शालिकणांश्चानैषीत्। ततस्तावेकत्र सह भुञ्जानौ परस्परं सुखमूषतुः।

एकदासौ काकस्तं मूषकमब्रवीत्। मित्र इतोतिदूरे वनमध्यवर्तिनी काप्यस्ति नदी। तस्यां मन्थरो नाम कोपि कूर्मो मे मित्रं

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



प्रतिवसति । तदहं तत्र सुप्राप्यामिषदेशे यास्यामि । इह कष्टेन लभ्यत आहारः । नित्यं व्याधभयं च । इत्युक्तवन्तं काकं मूषकोवदत् । सखे त्वयैव सहाहं वत्स्यामि । तन्मामपि तत्र नय । ममात्रापि स्थित्यां निर्वेदोस्ति । तं तत्र गत्वा ते निवेदयिष्यामि । इति वादिनं तं हिरण्यकं चञ्च्वादाय लघुपाती नभसा तद्वननदीतटमगच्छत् तत्र च मन्थरकेण सुहृदा सह मिलित्वा कृतातिथ्यो मूषकेणानुगतः स सुखं तस्थौ ।

Kathasaritsagara.

---

## IX.
## AN ACCOUNT OF TĀDAKĀ.

विश्वामित्रोऽब्रवीद्वाक्यं शृणु येन बलोत्कटा ।
वरदानकृतं वीर्यं धारयत्यबला बलम् ॥ १ ॥
पूर्वमासीन्महायक्षः सूकेतुर्नाम वीर्यवान् ।
अनपत्यः शुभाचारः स च तेपे महत्तपः ॥ २ ॥
पितामहस्तु सुप्रीतस्तस्य यक्षपतेस्तदा ।
कन्यारत्नं ददौ राम ताटकां नाम नामतः ॥ ३ ॥
ददौ नागसहस्रस्य बलं चास्याः पितामहः ।
न त्वेव पुत्रं यक्षाय ददौ चासौ महायशाः ॥ ४ ॥
तां तु बालां विवर्धन्तीं रूपयौवनशालिनीम् ।
जम्भपुत्राय सुन्दाय ददौ भार्यां यशस्विनीम् ॥ ५ ॥
कस्यचित्त्वथ कालस्य यक्षी पुत्रं व्यजायत ।
मारीचं नाम दुर्धर्षं यः शापाद्राक्षसोभवत् ॥ ६ ॥
सुन्दे तु निहते राम अगस्त्यमृषिसत्तमम् ।
ताटका सह पुत्रेण प्रधर्षयितुमिच्छति ॥ ७ ॥
भक्षार्थं जातसंरम्भा गर्जन्ती साभ्यधावत ।
आपतन्तीं तु तां दृष्ट्वा अगस्त्यो भगवानृषिः ॥ ८ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



१ अगस्त्यतपःस्थानमित्यर्थः।

राक्षसत्वं भजस्वेति मारीचं व्याजहार सः।
अगस्त्यः परमामर्षस्ताटकामभिशप्तवान् ॥ ९ ॥
पुरुषादी महायक्षी विकृता विकृतानना।
इदं रूपं विहायाशु दारुणं रूपमस्तु ते ॥ १० ॥
सैषा शापकृतामर्षा ताटका क्रोधमूर्छिता।
देशमुत्सादयत्येनमगस्त्याचरितं शुभम् ॥ ११ ॥
एनां राघव दुर्वृत्तां यक्षीं परमदारुणाम्।
गोब्राह्मणहितार्थाय जहि दुष्टपराक्रमाम् ॥ १२ ॥
न ह्येनां शापसंसृष्टां कश्चिदुत्सहते पुमान्। २ व्याप्तां
निहन्तुं त्रिषु लोकेषु त्वामृते रघुनन्दन ॥ १३ ॥
न हि ते स्त्रीवधकृते घृणा कार्या नरोत्तम।
चातुर्वर्ण्यहितार्थं हि कर्तव्यं राजसूनुना ॥ १४ ॥
नृशंसमनृशंसं वा प्रजारक्षणकारणात्। ३ वाशब्द इवार्थे
पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ॥ १५ ॥
राज्यभारनियुक्तानामेष धर्मः सनातनः।
अधर्म्यां जहि काकुत्स्थ धर्मो ह्यस्यां न विद्यते ॥ १६ ॥
श्रूयते हि पुरा शक्रो विरोचनसुतां नृप।
पृथिवीं हन्तुमिच्छन्तीं मन्थरामभ्यसूदयत् ॥ १७ ॥
विष्णुना च पुरा राम भृगुपत्नी पतिव्रता। ४ निद्रासुखरहितं
अनिन्द्रं लोकमिच्छन्ती काव्यमाता निषूदिता ॥ १८ ॥ ५ काव्यः शुक्रः
एतैश्चान्यैश्च बहुभी राजपुत्रैर्महात्मभिः।
अधर्मसहिता नार्यो हताः पुरुषसत्तमैः।
तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृप ॥ १९ ॥

× नाशयति

Ramayana.

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



# X.

## THE ACQUISITION OF FRIENDS.

### Part II.

एकदा कथान्तरेषु स मन्थरस्तं मूषकं देशनिर्वासकारणं वनागमनहेतुं च पप्रच्छ। ततो हिरण्यकस्तयोरुभयोः शृण्वतोः काककूर्मयोः स्वां वृत्तान्तकथामकथयत्। अहमासं क्वचिन्महानगरीमहाबिलवासी। तत्र च वसन्नेकदा राजकुलाद्धारमानीय निशि बिलेस्थापयम्। तेन च दृश्यमानेन हारेण सञ्जातौजसं मामन्नाहरणे समर्थं ज्ञात्वा मूषकाः पर्यवारयन्।

एतस्मिन्नन्तरे तत्र मदीयबिलान्तिके कश्चित्परिव्राड् मठिकां कृत्वा नानाविधानि भक्ष्याणि भिक्षया समानीय भुक्त्वा च सुखेन स्वपिति स्म। स्थापयामास च भुक्तशेषं भिक्षान्नं भिक्षाभाण्डस्थं कृत्वा प्रातर्जिघत्सया क्वचिद्देशे। अहं च प्रसुप्ते तस्मिन्प्रतिरात्रं बिलेनान्तः प्रविश्य तदन्नं निःशेषमकरवम्। एवं गच्छति काले कदाचित्तस्य सुहृदपरःपरिव्राड् भोजनानन्तरं तेन सह विविधां कथामकरोत्। मयि तदन्नं संग्रहीतुं प्रवृत्ते च स परिव्राड् जर्जरेण वंशखण्डेन मुहुस्तद्भाण्डकं समवादयत्। कथं मे कथामाक्षिप्यान्यत्र मनःसङ्गं करोषीति पृष्टः स परिव्राड् तमागन्तुमभ्यदधात्। मित्र इह मे मूषकोयं शत्रुर्जातः। यो दूरस्थमपि मदन्नमत्प्लुत्य प्रत्यहं नयति। तदस्य त्रासार्थं जर्जरवंशखण्डेनाहमन्नभाण्डमताडयम्। इतिवादिनं तमपरः परिव्राट् प्रत्यभाषत। मित्र लोभ एवात्र प्राणिनां दोषाय। तदत्र कथामेतामाकर्णय। अहमेकदा तीर्थानि भ्रमन्नेकं नगरं प्राप्नवम्। प्राविशं च तत्रैकस्मिन् ब्राह्मणगृहे निवासाय। मामुपस्थितं वीक्ष्य स विप्रो गृहिणीमवदत्। प्रियेस्य ब्राह्मणस्य कृतेद्य पर्वणि कृसरान् पचेति। सापि कुतस्ते निर्धनस्यैतदिति प्रत्युवाच। ततश्च विप्रस्तामब्रवीत्। भद्रे कर्तव्येपि सञ्चये नातिसञ्चयबुद्धिः कार्या। इति तेन द्विजेन प्रोक्ता गृहिणी तथेति भर्तुर्वचः प्रतिपद्य तिलानातपे प्राक्षिपत्। तस्यां च तथा कर्तुं

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


प्रवृत्तायां कुतोऽपि कश्चिच्छ्वा प्रविश्य तानदूषयत । ततो न कोऽपि तान्कुशरान् मूल्यादीनागृण्हात् । तदेवं लोभो नोपभोगाय प्रत्युत क्लेशाय । इत्युक्त्वा पुनरपि स आगन्तुरब्रवीत् । मित्र खनित्रमस्ति चेद्देहि । अद्यैव युक्त्या तवैतं मूषकोत्पातमुपद्रवं नाशयामि । इत्यभिधाय तेन परिव्राजा दत्तं खनित्रमादाय तन्मे बिलं खनितुमारेभे । क्रमाच्च तावदखनत् । ततः पलायनपरे मयि स खलु शठस्तं तत्रस्थं हारमन्यसञ्चयं चाहरत् । ततश्च तेन हारतेजसा मे तद्बिलं विरहितमभवत् । ततः स दुरात्मा परिव्राड् मयि शृण्वति तं स्थायिनं प्रव्राजमाह स्म । पश्यायं मूषिकः स्वजातिसमतां गत इति । अनन्तरं तं सर्वस्वं हारं मूर्ध्नि निधाय तावुभावागंतुस्थायिनौ प्रव्रजौ सुखसुप्तौ दृष्टौ । अथ प्रसुप्तयोः तयोः पुनस्तं हारं हर्तुमागतं मां वीक्ष्य स स्थायी परिव्राट् प्रबुद्धो यष्ट्या मां मूर्ध्न्यताडयत् । अहं च तेन सञ्जातव्रणोमृतो बिलमविशम् । ततो मम तदन्नाहरणे पुनः शक्तिर्नाभवत् । अर्थो हि पुंसां यौवनं तदभावे वार्द्धकमेव । तेन च वार्द्धकमेव । तेन च वार्द्धकेनौजोबलं रूपमुत्साहश्च परिहीयते । अथात्ममात्रभरणेऽयत्नवन्तं मां वीक्ष्य सर्वे ममानुचरा मां परित्यज्य गताः । अधनं प्रभुं भृत्या अपुष्पं तरुं भ्रमरा अजलं सरोवरं हंसाश्च चिरोषिता अपि त्यजन्ति । हे कूर्मराज इत्थं तत्र विपन्नः सुहृदं लघुपातिनं प्राप्य कथमपि सुखितः पश्चात् त्वदन्तिकमायात इति । एवं हिरण्योक्तमाकर्ण्य कूर्मराजः समभ्यदधात । मित्र स्वमेव स्थानमेतदाकलय्य माधृतिं कृथाः । गुणिनां न विदेशः सन्तुष्टस्य नासुखं धीरस्य न विपन्न चासाध्यं व्यवसायिनः ।

इति तस्मिन्वदति चित्रांगो नाम कश्चिन्मृगो दूराद् व्याधवित्रस्तस्तद्वनमाययौ । तं च तथागतं दृष्ट्वा पृष्ट्वा च वृत्तान्तं दृष्ट्वा चानागतं व्याधं ते कूर्मादयस्तेनाश्वासितेन मृगेण सह सख्यमकुर्वन्नवसंश्च सुखेन ।

१६ एप्रैल ० ६२६



CC-0. Gurukul Kangri Collection, Haridwar.

१. भस्त्रा

Digitized By Siddhanta eGangotri Gyaan Kosha



एकदा चित्रांगं चिरगतमीक्षितुं स लघुपाती तरुमारुह्य तद्व-नमैक्षत ददर्श च नदीतीरे कालपाशेन संयतं तं चित्रांगम्। अथावरुह्य तस्मात्पादपात्तद्वृत्तान्तमाखवे कूर्माय च न्यवेदयत्। ततः सम्मन्त्र्य स लघुपाती चंच्वा तं हिरण्यमादाय चित्रांगसमीपं निनाय। तं च तथागतं दृष्ट्वा हिरण्यस्तमाश्वास्य क्षणाद्दशनच्छिन्नपाशं कृत्वामुञ्चत्। तावच्च मन्थरकः कच्छपो नदीमध्येनाभ्येत्य सुहृत्प्रियतया तेषां निकटं नदीतटमारुरोह। क्षणे च तस्मिन्कुतोप्यागतः पाशहस्तो व्याधो विद्रुतान् मृगादीन्वीक्ष्य तं कूर्मं लब्ध्वा सन्तुष्टोभवत्। ततश्च तं जालिकायां क्षिप्त्वा नष्टमृगं प्रति समुत्सुको यावद्याति तावद्दीर्घदर्शिनो हिरण्यस्य वचनान्मृगो दूरं गत्वा पतित्वा मृत इवातिष्ठत्। काकोसौ तन्मूर्ध्नि चञ्च्वा चक्षुषी पाटयन्निव स्थितः। तदवलोक्य स व्याधो मृगं मृतं गृहीतमिव मत्वा नद्यास्तटे तं कूर्मं जालान्तस्थं निधाय मृगं प्रति गन्तुं प्रवृत्तः। तं यातं वीक्ष्य मूषकस्तस्य कूर्मस्य जालिकां सद्यश्चिच्छेद। स च कूर्मो नद्यां पपात। मृगोप्यासन्नं तं व्याधं कच्छपरहितं वीक्ष्योत्थाय प्रपलाय्यागच्छत्। काकोपि तरुमारूढः। ततश्च व्याधः प्रत्येत्य तं कूर्मं बन्धच्छेदपलायितमप्राप्योभयविभ्रष्टो दैवं शोचन् गृहमगात्। ततस्ते कूर्मादयो हृष्टा एकत्र मिलित्वावतस्थिरे। ततो मृगोतिप्रीतस्तान् सर्वानुवाच। पुण्यवानस्मि यदहं भवतः सुहृदः प्राप्तवान् ये प्राणानप्युपेक्ष्याद्याहं मृत्योरुध्दृतः। एवं मृगेण प्रशस्यमानास्ते कूर्मादयः परस्परप्रीतियुजस्तत्र वसन्ति स्म। तदेवं प्रज्ञया तिर्यंचोपि समीहितं साधयन्ति न मुंचन्ति च प्राणात्यये मित्रमापन्नम्।

Kathasaritsagara.

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



## XI
## THE SVAYAMVARA OF DAMAYANTI.
### Part 1.

अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान् भीमो राजा स्वयंवरे ॥ १ ॥
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २ ॥
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ ३ ॥
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धराः सर्वे प्रमृष्टमणिकुण्डलाः ॥ ४ ॥
तां राजसमितिं पुण्यां नागैर्भोगवतीमिव ।
सम्पूर्णां पुरुषव्याघ्रैः सिंहैर्गिरिगुहामिव ॥ ५ ॥
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवर्णसुश्लक्ष्णाः पंचशीर्षा इवोरगाः ॥ ६ ॥
सुकेशान्तानि चारूणि सुनासाक्षिभ्रुवाणि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ७ ॥
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ८ ॥
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ९ ॥
ततः सङ्कीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान् पञ्च तुल्याकृतीनिह ॥ १० ॥
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन् स्थितान् ।
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥ ११ ॥
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ।
सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भामिनी ॥ १२ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



कथं हि देवाञ्जानीयां कथं विद्यां नलं नृपम् ।
एवं सञ्चिन्तयन्ती सा वैदर्भी भृशदुःखिता ॥ १३ ॥
श्रुतानि देवलिङ्गानि तर्कयामास भारत ।
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ॥ १४ ॥
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ।
सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः ॥ १५ ॥
शरणं प्रति देवानां प्राप्तकालममन्यत ।
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ॥ १६ ॥
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ।
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ १७ ॥
मनसा वचसा चैव यथा नाभिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ १८ ॥
यथा देवैः स मे भर्ता विहितो निषधाधिपः
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ १९ ॥
यथेदं व्रतमारब्धं नलस्याराधने मया ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ २० ॥
स्वं चैव रूपं कुर्वन्तु लोकपाला महेश्वराः ।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ २१ ॥
निशम्य दमयन्त्यास्तत्करुणं परिदेवितम् ।
निश्चयं परमं तथ्यमनुरागं च नैषधे ॥ २२ ॥
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च नैषधे ।
यथोक्तं चक्रिरे देवा सामर्थ्यं लिङ्गधारणे ॥ २३ ॥

Mahabharata.

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



पुस्तकालय गुरुकुल कांगड़ी

# XII.

## THE SVAYAMVARA OF DAMAYANTI.

### Part II.

सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ।
हृषितस्रग्रजोहीनान् स्थितानस्पृशतः क्षितिम् ॥ १ ॥
छायाद्वितीयोम्लानस्रग्रजःस्वेदसमन्वितः
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥ २ ॥
सा समीक्ष्य तु तान्देवान्पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण पाण्डव ॥ ३ ॥
विलज्जमाना वस्त्रान्तं जग्राहायतलोचना ।
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम् ॥ ४ ॥
वरयामास चैवैनं पतित्वे वरवर्णिनी ।
ततो हाहेति सहसा मुक्तः शब्दो नराधिपैः ॥ ५ ॥
देवैर्महर्षिभिस्तत्र साधु साध्विति भारत ।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ॥ ६ ॥
दमयन्तीं तु कौरव्य वीरसेनसुतो नृपः ।
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ॥ ७ ॥
यत्त्वं भजसि कल्याणि पुमांसं देवसंनिधौ ।
तस्मान्मां विद्धि भर्तारमेतत्ते वचने रतम् ॥ ८ ॥ ?
यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ।
तावत्त्वयि भविष्यामि सत्यमेतद् ब्रवीमि ते ॥ ९ ॥
दमयन्तीं तथा वाग्भिरभिनंद्य कृताञ्जलिः ।
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ॥ १० ॥
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ।
वृते तु नैषधे भैम्या लोकपाला महौजसः ॥ ११ ॥
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ।
प्रत्यक्षं दर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ॥ १२ ॥
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ॥ १३ ॥
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ।
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ॥ १४ ॥
अपां पतिरपां भावं यत्र वाञ्छति नैषधः ।
स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः ॥ १५ ॥
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ।
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ॥ १६ ॥
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् ।
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ॥ १७ ॥
विवाहं कारयामास दमयन्त्या नलस्य च ।
उष्य तत्र यथाकामं नैषधो द्विपदां वरः ॥ १८ ॥
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ।
अवाप्य नारीरत्नं तु पुण्यश्लोकोपि पार्थिवः ॥ १९ ॥
रेमे सह तया राजञ् शच्येव बलवृत्रहा ।
अतीव मुदितो राजा भ्राजमानोंशुमानिव ॥ २० ॥
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ।
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ॥ २१ ॥
अन्यैश्च बहुभिर्धीमान् क्रतुभिश्चाप्तदक्षिणैः ।
पुनश्च रमणीयेषु वनेषूपवनेषु च ॥ २२ ॥
दमयन्त्या सह नलो विजहारामरोपमः ।
जनयामास च ततो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनांच कन्यकाम् ॥ २३ ॥
एवं यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसम्पूर्णां वसुधां वसुधाधिपः ॥ २४ ॥

Mahabharata.

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



## XIII

## THE PARROT CAUGHT BY A CHANDALA.

एवं चावहितचेतसा हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसै सञ्जातपक्षोभवम्। उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम्। गमनक्षमस्तु संवृत्तोस्मि। तत्र नाम चन्द्रापीडोत्पत्तिपरिज्ञानम्। महाश्वेता पुनः सैवास्ते। तत्किमुत्पन्नज्ञानोपि तद्दर्शनेन विनात्मानं निमेषमपि दुःखं स्थापयामि। भवतु तत्रैव गत्वा तिष्ठामि। इति निश्चित्यैकदा प्रातर्विहारनिर्गत एवोत्तरां ककुभं गृहीत्वाविहम्। अनभ्यस्ततया स्तोकमेव गत्वावाशीर्यन्त इव मेऽङ्गानि श्रमेण। अशुष्यच्चंचुपुटं पिपासया। नाडिन्धमेनाकम्पत कण्ठः श्वासेन। तदवस्थश्चासन्नतरस्य सरस्तीरतरुनिकुञ्जस्योपर्यात्मानममुञ्चम्। तत्र वृक्षच्छायास्थितो जलं निपीय कस्यचित्तरोर्मूलभागेऽतिष्ठम्। तथा स्थितश्चाध्वश्रमसुलभां निद्रामगच्छम्। चिरादिव लब्धप्रबोधो बद्धमात्मानमनुन्मोचनीयैस्तन्तुपाशैरपश्यम्। अग्रतश्च वर्णे चरिते च कृष्णं निवसने कर्मणि च मलिनं वपुषि वचसि च परुषं कमपि पुरुषमपश्यम्। आलोक्य च तादृशमात्मन उपरि निष्प्रत्याश एवापृच्छम्। भद्र कस्त्वम्। किमर्थं वा त्वया बद्धोस्मि। यद्यामिषतृष्णया तत्किमिति सुप्त एव न व्यापादितोस्मि। किं मया निरागसा बन्धदुःखमनुभावितेन। अथ केवलमेव कौतुकात् ततः कृतं कौतुकम्। मुञ्चतु मामिदानीं भद्रमुखः। मया खलु वल्लभजनोत्कण्ठितेन दूरं गन्तव्यम्। अकालक्षेपक्षमं वर्तते मे हृदयम्। भवानपि प्राणिधर्मे वर्तते। एवमुक्तः स मामुक्तवान्। महात्मन्नहं खलु क्रूरकर्मा जात्या चाण्डालः। न च मया त्वमामिषलुब्धेन कुतूहलेन वा बद्धः। मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे मातंगकप्रतिबद्धायां भूमौ कृतावस्थानः। तस्य दुहिता कौतुकमये प्रथमे वयसि वर्तते। तस्यास्त्वं केनापि दुरात्मना कथितो यथा जाबालेराश्रम एवंगुणविशिष्टो महाश्चर्यकारी शुकास्तिष्ठति। तया च

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



श्रुत्वोत्पन्नकौतुकात्त्वद्ग्रहणाय बहव एवापरे मादृशाः समादिष्टाः। तदद्य पुण्यैर्मयासादितोसि । तदहं तत्पादमूलं त्वां प्रापयामि । बन्धे मोक्षे चाधुना सा ते प्रभवतीति ।

अहं तु तच्छ्रुत्वा शुष्काशनिनेव ताडितः शिरसि संविग्नान्तरात्मा चेतस्यकरवम् । अहो मे मन्दपुण्यस्य दारुणतरः कर्मणां विपाकः । येन मया सुरासुरशिरःशेखराभ्यर्चितचरणसरसिजायाः श्रियो जातेन जगत्त्रयनमस्यस्य महामुनेः श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकाश्रमनिवासिना भूत्वा म्लेच्छजातिभिरपि दूरतः परिहृतप्रवेशमधुना पक्कणं प्रवेष्टव्यम् । चाण्डालैः सहैकत्र स्थातव्यम् । जरन्मातंगानीकरोपनीतैः कवलैरात्मा पोषणीयः । चाण्डालबालकजनस्य क्रीडनीयेन भवितव्यम् । दुरात्मन्पुण्डरीकहतक धिग् जन्मलाभं ते यस्य कर्मणामयमीदृशः परिणामः । किमर्थं प्रथमगर्भ एव न सहस्रधा शीर्णोसि । मातः श्रीरशरणजनशरणचरणपङ्कजेतिगहनभीषणाद्रक्ष मामस्मान्महानरकपातात् । तात भुवनत्रयत्राणक्षम त्रायस्व कुलतन्तुमेकम् । त्वयैव संवर्धितोस्मि तदा जन्मान्तरेपि पुनर्मा कृथाः मत्समागमप्रत्याशामिति ।

Kadambari.

---

## XIV.

### The parentage and birth of Mahasveta.

एतत्प्रायेण कल्याणाभिनिवेशिनः श्रुतिविषयमापतितमेव यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्तीति । तासां चतुर्दश कुलानि । एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम् । अन्यद्वेदेभ्यः सम्भूतम् । अन्यदग्नेरुद्गतम् । अन्यत्पवनात्प्रसूतम् । अन्यदमृतान्मथ्यमानादुत्थितम् । अन्यज्जलाज्जातम् । अन्यदर्ककिरणेभ्यो निर्गतम् । अन्यत्सोमरश्मिभ्यो निष्पतितम् । अन्यद्भूमेरुद्भूतम् । अन्यत् सौदामिनीभ्यः प्रवृत्तम् । अन्यन्मृत्युना

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


निर्मितम् । अपरं मकरकेतुना समुत्पादितम् । अन्यत्तु दक्षस्य प्रजापतेरतिप्रभूतानां सुतानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् । एवमेतान्येकत्र चतुर्दश कुलानि । गन्धर्वाणां तु दक्षात्मजाद्वितीयसम्भवं तदेव कुलद्वयं जातम् । तत्र मुनेस्तनयश्चित्रसेनादीनां पञ्चदशानां भ्रातृणामधिको गुणै षोडशश्चित्ररथो नाम समुत्पन्नः । स किल सकलत्रिभुवनप्रख्यातपराक्रमो भगवताखण्डलेन सुहृच्छब्देनोपबृंहितप्रभावः सर्वेषां गन्धर्वाणामधिपत्यं शैशव एवाप्तवान् । इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानन्तरे किम्पुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः । तत्र च तद्भुजयुगलपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति । तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितम् । इदं चाच्छोदाभिधानमतिमहत्सरो निखानितम् । अयं च भवानीपतिरुपरचितो भगवान् । अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गन्धर्वः । तस्मिन्द्वितीये गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान् । अपरिमितगन्धर्वबलपरिवारस्य तस्यापि स एव गिरिराधिवासः । यत्तु तत्सोममयूखसम्भवमप्सरसां कुलं तस्मात्किरणजालानुसारगलितेन सकलेनेव रजनिकरकलाकलापलावण्येन निर्मिता त्रिभुवननयनाभिरामा भगवती द्वितीयेव गौरी गौरीति नाम्ना हिमकरकिरणावदातवर्णा कन्यका प्रसूता । तां च द्वितीगन्धर्वकुलाधिपतिर्हंसो मन्दाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत् । सा तु भगवता मकरकेतनेनेव रतिः शरत्समयेनेव कमलिनी हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती निखिलान्तःपुरस्वामिनी च तस्याभवत् ।

तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमनेकदुःखसहस्रभाजनमेकैवात्मजा समुत्पन्ना ।

Kadambarisara, 2nd Edition.

CC-0. Gurukul Kangri Collection, Haridwar.

भानुचन्द्र टीका युते ग्रन्थे पृ. २१८

Digitized By Siddhanta eGangotri Gyaan Kosha



## XV.
## THE TWO RECLUSES.

अस्ति काश्मीरेषु विजयाख्यं महाक्षेत्रम् । तत्र विद्याभिमानवान् कश्चित्प्रवाजक आसीत् । सर्वत्र जयी भूयासमित्याशंसन्स शम्भुं प्रणम्य वादाय पाटलिपुत्रकं प्रतस्थे । गच्छंश्च मार्गे वनानि सरितो गिरीनतिक्रामन्परिश्रान्तस्तरोस्तले विशश्राम । क्षणाच्च दूराध्वधूसरं दण्डकुण्डिकाहस्तं कश्चिद्धार्मिकं ददर्श । कुतस्त्वं कुत्र यासीति पृष्टः स धार्मिकोभाषत । सखेहं विद्याक्षेत्रात्पाटलिपुत्रकादागतोस्मि वादेन पण्डिताञ्जेतुं काश्मीरान् प्रति यामि च । एतद्धार्मिकवचः श्रुत्वा स परिव्राडाचिन्तयत् । यदि मयैकः पाटलिपुत्रकोयं न जितस्तर्हि तत्र गत्वान्यान्बहून्कथं जेष्यामि । इत्यालोच्य स प्रव्राट् तं धार्मिकमाक्षिप्याह । इदं तव चेष्टितं विपरीतमिव दृश्यते । यतो वादिमुमुक्ष्वोर्महदन्तरम् । मुमुक्षुणा शान्तेन दांतेन च भवितव्यम् अतः शमकुठारेणेमं भवपादपं छिन्धि । इत्युक्तो धार्मिकः परितुष्टस्तं प्रणम्य भवान्मम गुरुरित्युक्त्वा च यथागतं जगाम ।

Kathasaritsagara.

---

## XVI.
## KALIDASA'S INTRODUCTION TO HIS RAGHUVAMSA.

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥
क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥
मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४ ॥
सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥
तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १० ॥

Raghuvamsa 1.

---

## XVII
## GENERAL PRECEPTS OF ADVICE.

देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न पि न जीवति ॥ १ ॥
माता गुरुतरा भूमेः खात्पितोच्चतरस्तथा ।
मनः शीघ्रतरं वाताच्चिन्ता बहुतरी तृणात् ॥ २ ॥
सार्थः प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ३ ॥
पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥ ४ ॥ सत्ता परमं शरणं
मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ५ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



तपः स्वधर्मवर्तित्वं मनसो दमनं दमः ।
क्षमा द्वन्द्वसहिष्णुत्वं हरिकार्यानिवर्तनम् ॥ ६ ॥
ज्ञानं तत्वार्थसम्बोधः शमश्चित्तप्रशान्तता ।
दया सर्वसुखैषित्वमार्जवं समचित्तता ॥ ७ ॥
क्रोधः स दुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ ८ ॥
मोहो हि धर्ममूढत्वं मानस्त्वात्माभिमानिता ।
धर्मनिष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते ॥ ९ ॥
स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम् ॥ १० ॥
धर्मज्ञः पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते ।
कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः ॥ ११ ॥
यदा धर्मश्च भार्या च परस्परवशानुगौ ।
तदाधर्मार्थकामानां त्रयाणामपि संगमः ॥ १२ ॥
ब्राह्मणं स्वयमाहूय याचमानमकिञ्चनम् ।
पश्चान्नास्तीति यो ब्रूयात्सोक्षयं नरकं व्रजेत् ।। १३ ॥
वेदेषु धर्मशास्त्रेषु मिथ्या यो वै द्विजातिषु ।
देवेषु पितृधर्मेषु सोक्षयं नरकं व्रजेत् ॥ १४ ॥
विद्यमाने धने लोभाद्दानभोगविवार्जितः ।
पश्चान्नास्तीति यो ब्रूयात्सोक्षयं नरकं व्रजेत् ॥ १५ ॥
वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
अक्षीणवृत्तो न क्षीणः वृत्ततस्तु हतो हतः ॥ १६
चतुर्वेदोपि दुर्वृत्तः स शूद्रादतिरिच्यते ।
योग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतिः ॥ १७ ॥

Mahabharata.

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# XVIII

## CHANDRAPIDA PURSUING A PAIR OF KINNARAS.

एकदा तु तत्रस्थ एवेंद्रायुधमारुह्य मृगयानिर्गतो विचरन्कानने शैलशिखरादवतीर्णं यदृच्छया किन्नरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया तु समुपजातकुतूहलः कृतग्रहणाभिलाषस्तत्समीपमादरादुपसर्पिततुरंगः समुपसर्पन्नदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितं च तत्पलायमानमेकाकी निर्गत्य निजबलसमूहात्सुदूरमनुससार। अत्र गृह्यत इदं गृहीतमित्यतिरभसाकृष्टचेता महाजवतया तुरंगमस्य मुहूर्तमात्रेणैकपदमिवासहायस्तस्मात्प्रदेशात्पंचदशयोजनमात्रमध्वानं जगाम। तच्चानुबध्यमानं किन्नरमिथुनमालोकयत एवास्य संमुखापतितमचलतुंगशिखरमारुरोह।

आरूढे च तस्मिञ्शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिं विधूततुरंगमश्चंद्रापीडस्तस्मिन्काले समारूढश्रमस्वेदार्द्रशरीरमिंद्रायुधमात्मानं चावलोक्य क्षणमिव विचार्य स्वयमेव विहस्याचिंतयत्। किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किन्नरयुगलेन प्रयोजनम्। यदि गृहीतमिदं ततः किम्। अथ न गृहीतं ततोपि किम्। अहो मे मूर्खतायाः प्रकारः। अहो यत्किंचनकारितायामादरः। अहो निरर्थकव्यापारेष्वभिनिवेशः। अहो बालिशचरितेष्वासक्तिः। कस्माद्हमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं भूमिमायातः कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्वमुखद्वयम्। इति विचार्यमाणे सत्यमयमात्मैव मे पर एव हासमुपजनयति। न जाने कियताध्वना विच्छिन्नमितो बलमनुयायि मे। महाजव इंद्रायुधो निमेषमात्रेणातिदूरमतिक्रामति। न चागच्छता मया तुरगवेगवशात्किन्नरमिथुने बद्धदृष्टिनास्मिन्नविरलतरुशतशाखागुल्मलतासंतानगहने महावने पंथा निरूपितो येन प्रतिनिवृत्य यास्यामि न चास्मिन्प्रदेशे प्रयत्नेनापि परिभ्रमता मर्त्यधर्मा कश्चिदासाद्यते यः सुवर्णपुर-

CC-0. Gurukul Kangri Collection, Haridwar.

शत्रुपञ्चादि गृहीत

Digitized By Siddhanta eGangotri Gyaan Kosha



गामिनं पंथानमुपदेक्ष्यति । श्रुतं हि मया बहुशः कथ्यमानमुत्तरेण सुवर्णपुरं सीमांतलेखा पृथिव्याः सर्व पदानां ततः परतो निर्मानुषमरण्यं तच्चातिक्रम्य कैलासगिरिरिति । अयं च कैलासः । तदिदानीं प्रतिनिवृत्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणमाशां केवलमंगीकृत्य गंतव्यम् । आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव । इत्यवधार्य वामकरतलवलितरश्मिपाशस्तुरंगमं व्यावर्तयामास ।

Kadambari.

---

## XIX
## MISCELLANEOUS VERSES.
### Part I

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १ ॥

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ २ ॥

उदये सविता रक्तो रक्तश्चास्तमने तथा ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ ३ ॥

साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् ।
न हि तापयितुं शक्यं सागरांभस्तृणोल्कया ॥ ४ ॥

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति* ॥ ५ ॥

पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोध्दृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ ६ ॥

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् ।

---

* Cf. the English phrase, " The mote thou seest in the eyes of others, but not the beam in thine own."

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ ७ ॥
लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ ८ ॥
दानोपभोगरहिता दिवसा यान्ति यस्य वै ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ९ ॥
सत्संगाद्भवति हि साधुता खलानां ।
साधूनां न हि खलसंगमात्खलत्वम् ।
आमोदं कुसुमभवं मृदेव धत्ते ।
मृद्गन्धं न हि कुसुमानि धारयंति ॥ १० ॥
न कस्यचित्कश्चिदिह स्वभावाद्भवत्युदारोऽभिमतः खलो वा ।
लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयंति ॥ ११ ॥
जवो हि सप्तेः परमं विभूषणं
त्रपांगनायाः कृशता तपस्विनः ।
द्विजस्य विद्या नृपतेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनाम् ॥ १२ ॥
गुणी गुणं वेत्ति न वेत्ति निर्गुणो
बली बलं वेत्ति न वेत्ति निर्बलः ।
पिको वसंतस्य गुणं न वायसः
करी च सिंहस्य बलं न मूषकः ॥ १३ ॥
शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः ॥ १४ ॥
शस्त्रैर्हतास्तु रिपवो न हता भवंति
प्रज्ञाहताश्च नितरां सुहता भवंति ।
शस्त्रं निहंति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हंति ॥ १५ ॥
येषां न विद्या न तपो न दानं

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



ज्ञानं न शीलं न गुणो न धर्मः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरंति ॥ १६ ॥

वरं वनं व्याघ्रगजादिसेवितं
जलेन हीनं बहुकंटकावृतम् ।
तृणानि शय्या परिधानवल्कलं
न बंधुमध्ये धनहीनजीवितम् ॥ १७ ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोप्यनुनय प्रच्छादय स्वान्गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ १८ ॥

स स्निग्धो कुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
सा स्त्री यानुविधायिनी स मतिमान् यः सद्भिरभ्यर्च्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते
तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेंद्रियैः ॥ १९ ॥

का विद्या कवितां विनार्थिनि जने त्यागं विना श्रीश्च का
को धर्मः कृपया विना क्षितिपतिः को नाम नीतिं विना ।
कः सूनुर्विनयं विना कुलवधूः का स्वामिभक्तिं विना
भोग्यं किं रमणीं विना क्षितितले किं जन्म कीर्तिं विना ॥ २० ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ २१ ॥

एकचक्रो रथो यंता विकलो विषमा हयाः ।
आक्रमत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ २२ ॥

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



# XX.

## MISCELLANEOUS VERSES.

### Part II.

गुणवज्जनसंसर्गाद्याति नीचोपि गौरवम् ।
पुष्पमालाप्रसंगेन सूत्रं शिरसि धार्यते ॥ १ ॥
उद्यमेन हि सिध्यंति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशंति मुखे मृगाः ॥ २ ॥
बहूनामप्यसाराणां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यंते मत्तदंतिनः ॥ ३ ॥
क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वन्हिः स्वयमेवोपशाम्यति ॥ ४ ॥
यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ॥ ५ ॥
स जीवति यशो यस्य कीर्तिर्यस्य स जीवति ।
अयशोकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥ ६ ॥
सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ ७ ॥
दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते ।
शुचिर्दक्षोनुरक्तश्च जाने भृत्योपि दुर्लभः ॥ ८ ॥
चिंतनीया हि विपदामादावेव प्रतिक्रियाः ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ ९ ॥
उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः ।
अधमा मातुलात् ख्याताः श्वशुराच्चाधमाधमाः ॥ १० ॥
क्षांतितुल्यं तपो नास्ति न तोषात्परमं सुखम् ।
नास्ति तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ ११ ॥
सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः ।
तन्मित्रं यस्य विश्वासः पुरुषः स जितेंद्रियः ॥ १२ ॥


CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



अतिपरिचयादवज्ञा*संततगमनादनादरो भवति ।
मलये भिल्लपुरंध्री चंदनतरुकाष्ठमिंधनं कुरुते ॥ १३ ॥
अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् ।
अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ १४ ॥
अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते ।
अनाश्रया न शोभन्ते पंडिता वनिता लताः ॥ १५ ॥
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तंद्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ १६ ॥
आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बांधवान् ॥ १७ ॥
स्थान एव नियोज्यंते भृत्यांश्चाभरणानि च ।
न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ १८ ॥
भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् ।
कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ १९ ॥
जलबिंदुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्यच ॥ २० ॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभंगुरम् ।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ २१ ॥
महाजनस्य संसर्गः कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ २२ ॥
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् ।
वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं लोके ॥ २३ ॥
नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराजस्य स्वयमेव मृगेंद्रता ॥ २४ ॥
छायामन्यस्य कुर्वंति तिष्ठन्ति स्वयमातपे ।
फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ २५ ॥

* "Familiarity breeds contempt."

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः ।
जगत्संमोहजननी यैराशाशीविषा जिता ॥ २६ ॥

भार्यावियोगः स्वजनापवाद ऋणस्य शेषः कृपणस्य सेवा ।
दारिद्र्यकाले प्रियदर्शनं च विनाग्निना पंच दहंति कायम् ॥२७॥

मृगा मृगैः संगमनुव्रजंति
गावश्च गोभिस्तुरगास्तुरंगैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥ २८ ॥

क्षारं जलं वारिमुचः पिबंति
तदेव कृत्वा मधुरं वमंति ।
संतस्तथा दुर्जनदुर्वचांसि
पीत्वा च सूक्तानि समुद्गिरंति ॥ २९ ॥

धनैर्निष्कुलीना कुलीना भवंति
धनैरापदं मानवा निस्तरंति ।
धनेभ्यः परो बांधवो नास्ति लोके
धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ३० ॥

सर्पाः पिबंति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवंति ।
कंदैः फलैर्मुनिवराः क्षपयंति कालं
संतोष एव पुरुषस्य परं निधानम् ॥ ३१ ॥

---

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# द्वितीयावलिः ।

# second series.

## I

## A MISER'S PROSPECTS.

कस्मिंश्चिन्नगरे कश्चित्स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म । तस्य भिक्षार्जितैः सक्तुभिर्भुक्तोर्वरितैर्घटः परिपूरितः । तं च घटं नागदंतेवलंब्य तस्याधस्तात्खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति । अथ कदाचिद्रात्रौ सुप्तश्चिंतयामास । यत्परिपूर्णोऽयं घटस्तावत्सक्तुभिर्वर्तते । तद्यदि दुर्भिक्षं भवति तदनेन रूपकाणां शतमुत्पद्यते । ततस्तेन मयाजाद्वयं गृहीतव्यम् । ततः षाण्मासिकप्रसववशात्ताभ्यां यूथं भविष्यति । ततोजाभिः प्रभूता गा ग्रहीष्यामि । गोभिर्महिष्यो महिषीभिर्वडवाः । वडवाप्रसवतः प्रभूता अश्वा भविष्यंति । तेषां विक्रयात्प्रभूतं सुवर्णं भविष्यति। सुवर्णेन चतुःशालं गृहं संपद्यते । ततः कश्चिद्ब्राह्मणो मम गृहमागत्य प्राप्तवरां रूपाढ्यां कन्यां दास्यति । तत्सकाशात्पुत्रो मे भविष्यति । तस्याहं सोमशर्मेति नाम करिष्यामि । तस्मिञ्जानुचलनयोग्ये संजातेहं पुस्तकं गृहीत्वाश्वशालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि । अत्रांतरे सोमशर्मा मां दृष्ट्वा जनन्युत्संगाज्जानुचलनपरोश्वखुरासन्नवर्ती मत्समीपमागमिष्यति । ततोहं ब्राह्मणीं कोपाविष्टोभिधास्यामि गृहाण तावद्बालकम् । सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति । ततोहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि । एवं तेन ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः । सक्तुभिः पांडुरतां गतश्च । अतोहं ब्रवीमि ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



अनागतवतीं चिंतामसंभाव्यां करोति यः।
स एव पांडुरः शेते सोमशर्मपिता यथा ॥

Panchatantra V.

---

## II

## NATURE CANNOT BE CHANGED.

अस्ति कस्मिंश्चिदधिष्ठाने तपोवने शालंकायनो नाम तपोधनो जान्हव्यां स्नानार्थं गतः।

तस्य च सूर्योपस्थानं कुर्वतस्तत्र प्रदेशे मूषिका काचित्खरतरनखाग्रपुटेन श्येनेन गृहीता। तां दृष्ट्वा स मुनिः करुणार्द्रहृदयो मुंच मुंचेति कुर्वाणस्तस्य पाषाणखंडं प्राक्षिपत्। सोपि पाषाणखंडप्रहारव्याकुलेंद्रियो भ्रष्टमूषिको भूमौ निपपात। मूषिकापि भयत्रस्ता कर्तव्यमजानती रक्ष रक्षेति जल्पन्ती मुनिचरणांतिकमुपाविशत्। श्येनेनापि चेतनां लब्ध्वा मुनिरुक्तः। यद्भो मुने न युक्तमनुष्ठितं भवता यदहं पाषाणेन ताडितः। किं त्वमधर्मान्न बिभेषि। तत्समर्पय ममैनां मूषिकां नो चेत्प्रभूतं पापमवाप्स्यासि। इति ब्रुवाणं श्येनं प्रोवाच सः। भो विहंगाधम रक्षणीयाः प्राणिनां प्राणाः। दंडनीया दुष्टाः। संभावनीया गुरवः। स्तुत्या देवाः। तत्किमसंबद्धं प्रजल्पसि। श्येन आह। मुने न तत्वं सूक्ष्मधर्मं वेत्सि। इह हि सर्वेषां प्राणिनां विधिना सृष्टिं कुर्वताहारोपि विनिर्मितः। ततो यथा भवतामन्नं तथास्माकं मूषिकादयो विहिताः। तत्स्वाहारकांक्षिणं मां किं दूषयसि। तच्छ्रुत्वा मुनिर्विहस्याह भो मूर्ख विहंगम कृतयुगे धर्मः स आसीत्। एष पुनः कलियुगः। अत्र सर्वोपि पापात्मा। तत्कर्मकृतं विना पापं न लगति। तत्किं वृथा प्रलपितेन। गच्छ त्वम्। नो चेच्छापयिष्यामि। अथ गते श्येने मूषिकया स मुनिरभिहितः। भगवन्नय मां स्वाश्रयम्। नो चेदन्यो दुष्टपक्षी कश्चिन्मां व्यापादयिष्यति। तदहं तत्रैवाश्रमे त्वद्दत्तान्ना-

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



हारमुष्ट्या कालं नेष्यामि । सोपि दाक्षिण्यवान्सकरुणो व्यचिंतयत् । कथं मया मूषिका हस्ते धृता नेया जनहास्यकारिणी । तदेनां कुमारिकां कृत्वा नयामि । एवं सा कन्यका कृता । तथानुष्ठिते कन्यासहितं मुनिमवलोक्य पत्नी पप्रच्छ भगवन्कुत इयं कन्या । स आह । एषा मूषिका श्येनभयाच्छरणार्थिनी कन्यारूपेण तव गृहमानीता । तत्त्वया यत्नेन रक्षणीया । भूयोप्येनां मूषिकां करिष्यामि । सा प्राह । भगवन्मैवं कार्षीः । अस्यास्त्वं धर्मपिता । उक्तं च ।

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ १ ॥

तत्त्वयास्याः प्राणाः प्रदत्ताः । अपरं ममाप्यपत्यं नास्ति । तस्मादेषा मम सुता भविष्यति । तथानुष्ठिते सा कन्यका शुक्लपक्षचंद्रकालिकेव नित्यमेव वृद्धिं प्राप्नोति । सापि तस्य सपत्नीकस्य मुनेः शुश्रूषां कुर्वती यौवनमाश्रयात् । अथ तां यौवनोन्मुखीमवलोक्य शालंकायनः स्वपत्नीमुवाच । प्रिये यौवनोन्मुखी वर्तत इयं कन्या । अनर्हा सांप्रतं मद्गृहवासस्य । तत्कस्मैचिच्छ्रेष्ठवराय प्रदीयते । साह । को दोषोत्र विषये । एवं क्रियताम् । अथ मुनिना समाहूतः सविता तत्क्षणमेवाभ्युपेत्य प्रोवाच । भगवन् वद द्रुतं किमर्थमहमाहूतः । स आह । एषा मत्कन्या यदि त्वां वृणोति तद्विवाहय । एवमुक्त्वा भगवांस्तस्या दर्शितः । स प्रोवाच । पुत्रि किं तव रोचत एष भगवांस्त्रैलोक्यदीपः । सा प्राह । अतिदहनात्मकोयम् । नाहमेनमाभिलषामि । अस्मादपि यः कश्चिदुत्कृष्टतरः स आहूयताम् । अथ तस्यास्तद्वचनमाकर्ण्य भास्करोपि तां मूषिकां विदित्वा निःस्पृहस्तमुवाच । भगवन् अस्ति ममाप्युत्तमो मेघो येनाच्छादितस्य मे नामापि न ज्ञायते । अथ मुनिना मेघोप्याहूतः । सा पृष्टा च एष रोचते । सा मुनिमाह यन्मां मेघादपि श्रेष्ठाय प्रयच्छ । अतो मेघोपि मुनिना पृष्टः । भोस्तवाभ्यधिकः कोप्यस्ति । स आह यदास्ति ममाप्याधिको वायुः ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


वायुना हतोहं सहस्रधा यामि। तच्छ्रुत्वा मुनिना वायुराहूतः। कन्या पृष्टा च। एष उत्तमो वायुस्तव प्रतिभाति। सा प्राह। तात प्रबलोप्ययं चंचलः। तदभ्याधिकः श्रेष्ठतर आनीयताम्। मुनिराह। भो वायो तवाभ्याधिकोस्ति कश्चित्। स आह। ममाप्यधिकाः पर्वताः संति यैः संस्तभ्य बलवंतोपि वयं ध्रियामहे। अथ मुनिः पर्वतमाहूय कन्याया अदर्शयत्। पुत्रिके त्वामस्मै प्रयच्छामि। साह तात कठिनात्मकोयम्। तदन्यस्य प्रदीयताम्। अथ स मुनिना पृष्टः। यद्भो पर्वतराज तवाभ्याधिकः कश्चिदस्ति। स आह। संति ममाप्याधिकाः मूषकाः येस्मद्देहं बलात्सर्वतो भेदयंति। तदाकर्ण्य मुनिर्मूषकमाहूय तस्या अदर्शयत्। पुत्रिके एष ते प्रतिभाति मूषकराजो येन यथोचितमनुष्ठीयते। सापि तं दृष्ट्वा स्वजातीय इति मन्यमाना प्रोध्द्वषितशरीरांता प्रोवाच। तात मां मूषिकां कृत्वास्मै मूषकाय प्रयच्छ येन स्वजातिविहितं गृहस्थधर्ममनुभवामि। तच्छ्रुत्वा तेन स्त्रीधर्मविचक्षणेन तां मूषिकां कृत्वा मूषकाय प्रदत्ता। अतोहं ब्रवीमि।

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥ २॥

Panchatantra V.

---

# III
## GENERAL PRECEPTS.

आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १ ॥

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ २ ॥

लुब्धमर्थेन गृण्हीयात्क्रुद्धमंजलिकर्मणा।
मूर्खं छंदानुवृत्तेन याथातथ्येन पंडितम् ॥ ३ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

छन्दः= परीक्षा

Digitized By Siddhanta eGangotri Gyaan Kosha



अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वंचनं चापमानं च मतिमान्न प्रकाशयेत् ॥ ४ ॥
मनसा चिंतितं कर्म वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥ ५ ॥
कुदेशं च कुवृत्तिं च कुभार्यां कुनदीं तथा ।
कुद्रव्यं च कुभोज्यं च वर्जयेत्तु विचक्षणः ॥ ६ ॥
ऋणशेषोग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्धते यस्मात्तस्मात् शेषं न कारयेत् ॥ ७ ॥
दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ८ ॥
माता यस्य गृहे नास्ति भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ९ ॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपास्विनाम् ॥ १० ॥
अविद्याजीवनं शून्यं दिक् शून्या चेदबांधवा ।
पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ ११ ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥ १२ ॥
अतिदर्पे हता लंका अतिमाने च कौरवाः ।
अतिदाने वलिर्बद्धः सर्वमत्यंतगर्हितम् ॥ १३ ॥
दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः ।
दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ १४ ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चंदनं न वने वने ॥ १५ ॥
कुलीनैः सह संपर्कः पंडितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ १६ ॥
दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चाराणामनृतं बलम् ॥ १७ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


बह्वाशी स्वल्पसंतुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ १८ ॥
अविश्रामं वहेद्भारं शीतोष्णं च न विंदति ।
ससंतोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ १९ ॥
युद्धं च प्रातरुत्थानं भोजनं सह बंधुभिः ।
स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ २० ॥
कोतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ २१ ॥

Chanakyasataka.

---

## IV.

## THE LAP-WING AND THE SEA.

कस्मिंश्चित्समुद्रैकदेशे टिट्टिभदंपती वसतः । ततो गच्छति काले टिट्टिभी गर्भमाधत्त । आसन्नप्रसवा सा टिट्टिभमूचे । भोः कांत मम प्रसवसमयो वर्तते । तद्विचिंत्यतां किमपि निरुपद्रवं स्थानं येन तत्राहमंडमोक्षणं करोमि । स आह । भद्रे रम्योयं समुद्रप्रदेशः । तदत्रैव प्रसवः कार्यः । सा प्राह । अत्र पूर्णिमादिने समुद्रवेला चटति । सा मत्तगजेंद्रानप्याकर्षति । तद् दूरमन्यत्र किंचित् स्थानमन्विष्यताम् । तच्छ्रुत्वा विहस्य टिट्टिभ आह । भद्रे न युक्तमुक्तं भवत्या । का मात्रा समुद्रस्य यो मम दूषयिष्यति प्रसूतिम् । तद्विश्रब्धात्रैव गर्भं मुंच । तच्छ्रुत्वा समुद्रश्चिंतयामास । अहो गर्वः पक्षिकीटस्यास्य । तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यं । किं ममैषोऽडापहारे करिष्यति । इति चिंतयित्वा स्थितः । अथ प्रसवानंतरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रोऽडान्यपजहार । अथायाता सा प्रसवस्थानं शून्यमवलोक्य प्रलपंती टिट्टिभमूचे । भो मूर्ख कथितमासीन्मया ते यत्समुद्रवेलयांडानां विनाशो भविष्यति । तद्दूरतरं व्रजाव इति ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


परं मूढतयाहंकारमाश्रित्य मम वचनं नाकरोः। स आह। भद्रे किं मां मूर्खं संभावयसि। तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टं समुद्रं शोषयामि। सा प्राह। अहो कस्ते समुद्रेण सह विग्रहः। अथवा साध्विदमुच्यते।

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः।
गच्छन्नभिमुखो नाशं याति वन्हौ पतंगवत् ॥ १ ॥

स आह। प्रिये मा मैवं वद। येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरूनपि विक्रमंते। तदनया चंच्वास्य सकलं तोयं शुष्कस्थलतां नयामि। टिट्टिभ्याह। भोः कांत यत्र जान्हवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति तथा सिंधुश्च तत्कथमेतादृशं समुद्रं विप्रुषवाहिन्या चंच्वा शोषयिष्यसि। तत्किमश्रद्धेयेनोक्तेनेति। स आह। अनिर्वेदः श्रियो मूलम्। मम चंचुर्लोहसंनिभा। अहोरात्राणि दीर्घाणि च। तत्किं समुद्रो न शुष्यति सा प्राह। यदि त्वयावश्यं समुद्रेण सह वैरानुष्ठानं कार्यं तदान्यानपि विहगानाहूय सुहृज्जनसहित एवं समाचर। यतोसाराणामपि बहूनां समवायो दुर्जयः। सम्यग् मंत्रितं भवत्येत्युक्त्वा स बकसारसमयूरादीनाहूय भोः पराभूतोहं समुद्रेणांडापहारेण तच्चिंत्यतामस्य शोषणोपाय इति प्रोवाच। तेसंमंत्र्य प्रोचुः। अशक्ता वयमस्मिन्कर्मणि। तदस्माकं स्वामी वैनतेयोस्ति। तत्सकाशं गत्वैतत्परिभवस्थानं तस्मै निवेदयामो येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति। तथा निश्चित्य सर्वे ते गरुडस्य सकाशं गत्वा टिट्टिभवृत्तांतं तस्मायकथयन्। तं समाकर्ण्य गरुडः कोपाविष्टः सन् समुद्रशोषणनिश्चयं चकार। अत्रांतरे विष्णुदूत आगत्य तमुवाच। भो गरुत्मन् देवकार्येण श्रीभगवानमरावतीं यास्यति तत्सत्वरं त्वयागम्यतामिति। गरुडः साभिमानं प्राह। भो दूत किं मया कुभृत्येन भगवान्करिष्यति। तद्गत्वा वद मदन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम्। मदीयो नमस्कारश्च भगवते वाच्यः। दूत आह। भो वैनतेय त्वया कदाचिदपि भगवंतं प्रति

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


नैतादृगभिहितम् । तत्कथय किं ते भगवतापमानस्थानं कृतम् । गरुड आह । भगवदाश्रयभूतेन समुद्रेणास्मट्टिट्टिभांडान्यपहृतानि । तद्यदि निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष मे निश्चयस्त्वया वाच्यः । अथ दूतमुखेन कुपितं वैनतेयं ज्ञात्वा भगवान् सत्वरं तत्सकाशं जगाम । वैनतेयोपि गृहागतं भगवंतमवलोक्य त्रपाधोमुखः प्रणम्योवाच । भगवंस्त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्यांडान्यपहृत्य मेपमानस्थानं कृतम्। परं युष्मल्लज्जयाहं तं स्थलतां न नयामि । यतः स्वामिभयाच्छुनोपि प्रहारो न दीयते । तच्छ्रुत्वा भगवानाह । सत्यमभिहितं भवता । तदागच्छ येनांडानि समुद्रादादाय टिट्टिभं संभावयामः । तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं संधायाभिहितः । भो दुरात्मन् दीयतां टिट्टिभांडानि । नो चेत्स्थलतां त्वां नयामि । ततः सभयेनांडानि प्रदत्तानि तानि टिट्टिभेनापि स्वभार्यायै समर्पितानि । अतोहं ब्रवीमि ।

शत्रोर्बलमविज्ञाय वैरमारभते तु यः ।
स पराभवमाप्नोति समुद्रष्टिट्टिभादिव ॥ २ ॥

Panchatantra 1.

---

## V.

## KING NALA AND THE SWAN.

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ १ ॥
अतिष्ठन्मनुजेंद्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ २ ॥
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ३ ॥
ईप्सितो वरनारीणामुदारः संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ॥ ४ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥ ५ ॥
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद् ब्रम्हर्षिर्दमनो नाम भारत ॥ ६ ॥
तं स भीमः प्रजाकामस्तोषयामास धर्मविद् ।
महिष्या सह राजेंद्र सत्कारेण सुवर्चसम् ॥ ७ ॥
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ८ ॥
दमयंतीं दमं दांतं दमनं च सुवर्चसम् ।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ॥ ९ ॥
दमयंती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ १० ॥
अथ तां वयसि प्राप्ते दासीनां समलंकृतम् ।
शतं शतं सखीनां च पर्युपासच्छचीमिव ॥ ११ ॥
तत्र स्म राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येनवद्यांगी विद्युत्सौदामिनी यथा ॥ १२ ॥
अतीव रूपसंपन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ॥ १३ ॥
मानुषेष्वपि चान्येषु दृष्टपूर्वाथवा श्रुता ।
चित्तप्रसादनी बाला देवानामपि सुंदरी ॥ १४ ॥
नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि ।
कंदर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ १५ ॥
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयंतीं पुनः पुनः ॥ १६ ॥
तयोरदृष्टः कामोभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रति कौंतेय स व्यवर्धत हृच्छयः ॥ १७ ॥
अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।
अंतःपुरसमीपस्थे वन आस्ते रहोगतः ॥ १८ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


स ददर्श ततो हंसान् जातरूपपरिष्कृतान् ।
वने विचारतां तेषामेकं जग्राह पक्षिणम् ॥ १९ ॥
ततोंतरिक्षगो वाचं व्याजहार नलं तदा ।
हंतव्योस्मि न ते राजन् करिष्यामि तव प्रियम् ॥ २० ॥
दमयंतीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ २१ ॥
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ २२ ॥
विदर्भनगरीं गत्वा दमयंत्यास्तदांतिके ।
निपेतुस्ते गरुत्मंतः सा ददर्श च तान् खगान् ॥ २३ ॥
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ २४ ॥
ते तु सर्वे विससृपुः सर्वतः प्रमदावने ।
एकैकशस्तदा कन्यास्तान् हंसान्समुपाद्रवन् ॥ २५ ॥
दमयंती तु यं हंसं समुपाधावदंतिके ।
स मानुषीं गिरं कृत्वा दमयंतीमथाब्रवीत् ॥ २६ ॥
दमयंति नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ २७ ॥
कंदर्प इव रूपेण मूर्तिमानभवत्स्वयम् ।
तस्य वा यदि भार्या त्वं भवेथा वरवर्णिनि ॥ २८ ॥
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ।
वयं हि देवगंधर्वमनुष्योरगराक्षसान् ॥ २९ ॥
दृष्टवंतो न चास्माभिर्दृष्टपूर्वस्तथाविधः ।
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ॥ ३० ॥
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् ।
एवमुक्ता तु हंसेन दमयंती विशांपते ॥ ३१ ॥
अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



तथेत्युक्त्वांडजः कन्यां विदर्भस्य विशांपते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३२ ॥

Mahabharata.

---

## VI.
## HOW DASHARATHA WAS CURSED.

सभार्ये रामे वनं गते दशरथः परमशोकार्तः कौसल्यामाह । देवि इदं दुःखं स्वयंकृतमेव मयानुप्राप्तम् । तद्यथा । पुरा प्रावृट्-समये व्यायामार्थमहं सरयूनदीमिगच्छम् । अथांधकारे नर्दतो वारणस्येव जले पूर्यमाणस्य कुंभस्य घोषमहमशृणवम् । ततः शर-मुद्धृत्याभिलक्ष्मपातयम् । अथ तत्क्षण एव हा हा हतोस्मि को मम वधेनार्थी स्यात् किं वास्य मयापकृतं नेममात्मवधमनु-शोचामि किंतु मद्वधे वृद्धावंधौ च पितरावनुशोचामीत्यादि क्रंद-मध्वनिमशृणवम् । ततो विषण्णमनास्तं देशमुपागम्य सरय्वा-स्तीरे बाणेन हतं तापसमपश्यम् । स मामुद्वीक्ष्येदं क्रूरं वच उवाच । राजन् वने निवसता मया किं तवापकृतं यद् गुर्वर्थ-मंभो हर्तुकामोहं त्वया बाणेन मर्मण्यभिहतः । हते मयि वृद्धा-वंधौ दुर्बलौ च मम पितरौ हतावेवेति विद्धि । तत्तौ शीघ्रं गत्वेमं वृत्तांतं श्रावय पितरं च प्रसादय न त्वां कुपितोपि शपेत। राजन् ब्रम्हहत्याकृतस्तापो हृदयादपनीयतां यतो नाहं ब्राह्मणः किंतु वैश्येन शूद्रायां जातोस्मि। इत्युक्त्वा प्राणांस्त्यक्तवति तस्मिन्नहं तं घटमादाय तत्पितुराश्रमं गतः । मत्पदशब्दं श्रुत्वा स मुनिरभाषत पुत्र किं चिरायसे । इयं ते माता पिपासिता त्वयि प्राणाः समासक्तः कथं त्वं नाभिभाषसे । तत्श्रुत्वा विव्हल-मना अहमब्रवम् । नाहं तव पुत्रः किंतु दशरथो नाम क्षत्रियोस्मि यथा च मयाज्ञानात्तव पुत्रको हतस्तत् श्रूयताम् । इत्युक्त्वा पुत्रवधप्रकारं परमदुःखितोकथयम् । तत्श्रुत्वा बाष्पपूर्णवदनो निःश्वसञ्शोकमूर्छितो मुनिः कृतांजलिमुपस्थितं मामुवाच । इदं

CC-0. Gurukul Kangri Collection Haridwar

Digitized By Siddhanta eGangotri Gyaan Kosha



महत्पापं खलु त्वया कृतम्। ज्ञानपूर्वं कृतं चेद्वज्रिणमपि स्वस्थानाच्च्यावयेत। किंत्वज्ञानात्त्वया कृतमिदम्। तेन जीवसि न शतधा दीर्णोऽसि। अधुना नय नौ तं देशमिति मामभ्यभाषत च। अथाहं तौ तत्र नीत्वा पुत्रमस्पर्शयम्। तं स्पृष्ट्वा पितरौ बहुविधं विलेपतुः। विलप्य च स मुनिर्भार्यया सहोदकं कर्तुं प्रावर्तत। अनंतरं कृतांजलिमुपस्थितं मामुवाच। अद्यैव जहि मां राजन् मरणे नास्ति मे व्यथा। यथा पुत्रमरणजं मे सांप्रतमिदं दुःखमेवं त्वमपि पुत्रशोकेन कालं करिष्यसि। इति मयि शापं न्यस्य करुणं विलप्य च देहं चितायामारोप्य तन्मिथुनं स्वर्गमभ्ययात्।

तद्देवि तस्यायं पापकर्मणो विपाकोऽद्य समुपस्थितः। कौसल्ये चक्षुषा त्वां न पश्यामि। स्मृतिर्मम विलुप्यते। एते वैवस्वता दूता मां त्वरयंति। धन्याः खलु ते नरा ये रामस्य पद्मपत्रेक्षणं सुदंष्ट्रं चारुनासिकं ताराधिपसमं मुखं द्रक्ष्यंति। हा महाबाहो राघव हा पितृप्रिय हा कौसल्ये हा कुलपांसिनि कैकेयि इति राममातुः सुमित्रायाश्च संनिधौ शोचन् राजा दशरथो जीवितांतमुपागमत्।

Ramayana.

---

## VII

## DAMAYANTI LAMENTING IN THE FOREST.

अपक्रांते नले राजन्दमयंती गतक्लमा।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १ ॥
अपश्यमाना भर्तारं शोकदुःखसमन्विता।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ २ ॥
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम्।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ३ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य कानने ॥ ४ ॥
कथमुत्सृज्य गतासि दक्षां भार्यामनुव्रताम् ।
विशेषतोनपकृते परेणापकृते सति ॥ ५ ॥
शक्यसे ता गिरः सम्यक्कर्तुं मयि नरेश्वर ।
यास्तेषां लोकपालानां सान्निधौ कथिताः पुरा ॥ ६ ॥
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कांता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ७ ॥
पर्याप्तः परिहासोयमेतावान्पुरुषर्षभ ।
भीताहमतिदुर्धर्ष दर्शयात्मानमीश्वर ॥ ८ ॥
दृश्यसे दृश्यसे राजन्नेष दृष्टोसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ९ ॥
नृशंसं बत राजेंद्र यन्मामेवंगतामिह ।
विलपंतीं समागम्य नाश्वासयसि पार्थिव ॥ १० ॥
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ ११ ॥
कथं नु राजंस्तृषितः क्षुधितः श्रमकार्षितः ।
सायान्हे वृक्षमूलेषु मामपश्यन्भविष्यसि ॥ १२ ॥
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ १३ ॥
मुहुरुत्पतते बाला मुहुः पतति विव्हला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १४ ॥
अतीव शोकसंतप्ता मुहुर्निःश्वस्य विव्हला ।
उवाच भैमी निश्वस्य रुदत्यथ पतिव्रता ॥ १५ ॥
यस्याभिशापाद् दुःखार्तो दुःखं विंदति नैषधः ।
तस्य भूतस्य नो दुःखाद् दुःखमप्यधिकं भवेत् ॥ १६ ॥
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद् दुःखतरं प्राप्य स जीवत्वसुजीविकाम् ॥ १७ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


एवं तु विलपंती सा राज्ञो भार्या महात्मनः ।
अन्वेषमाणा भर्तारं वने श्वापदसेविते ॥ १८ ॥
उन्मत्तवद्भीमसुता विलपंती इतस्ततः ।
हा हा राजन्निति मुहुरितश्चेतश्च धावति ॥ १९ ॥
तां क्रंदमानामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचंतीं विलपंतीं मुहुर्मुहुः ॥ २० ॥
सहसाभ्यागतां भैमीमभ्यासपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २१ ॥
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २२ ॥
हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ २३ ॥
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
कथं भवान् जगामाद्य मामुत्सृज्य वने प्रभो ॥ २४ ॥

Mahabharata.

---

मयूरेश्वर टीका कृता या
मानचन्द्र "

## VIII
## THE PARROT REQUESTED TO TELL ITS TALE.

अथ वैशंपायनः प्रतीहार्या गृहीतपंजरः कनकवेत्रलतावलंबिना कंचुकिनानुगम्यमानो राजांतिकमाजगाम । क्षितितलानिहितकरतलस्तु कंचुकी राजानं व्यज्ञापयत् । देव देव्यो विज्ञापयंति । देवादेशादेष वैशंपायनः स्नातः कृताहारश्च देवपादमूलं प्रतीहार्यानीतः । इत्युभिधाय गते तस्मिन्राजा वैशंपायनमपृच्छत् । कच्चिदभिमतमास्वादितमभ्यंतरे भवता किंचिदशनजातमिति । स प्रत्युवाच । देव किं वा नास्वादितम् । कषायमधुरः प्रकाममापीतो जंबूफलरसः । खंडितानि दाडिमबीजानि । नलिनीदलहरिंति


CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


द्राक्षाफलस्वादूनि च दलितानि स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना। सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायत इति। एवंवादिनो वचमाक्षिप्य नरपतिरब्रवीत्। आस्तां तावत्सर्वमेवेदम्। अपनयतु नः कुतूहलम्। आवेदयतु भवान्कथं जातः केन वा नाम कृतम्। का माता। कस्ते पिता। कथं वेदानामागमः। कथं शास्त्राणां परिचयः। कुतः कलाः समासादिताः। किं जन्मांतरानुस्मरणयुतवरप्रदानम्। अथवा विहंगवेषधारी कश्चिच्छन्नो निवससि। क्व वा पूर्वमुषितम्। कियद्वा वयः। कथं पंजरबंधः। कथं चांडालहस्तगमनम्। इह वा कथमागमनमिति। वैशंपायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्तमिव ध्यात्वा सादरमब्रवीत्। देव महतीयं कथा। यदि कौतुकमाकर्ण्यताम्।

Kadabmari.

---

## IX

## THE LAKE PAMPA.

सौमित्रे शोभते पंपा वैदूर्यविमलोदका।
फुल्लपद्मोत्पलवती शोभिता विविधैर्द्रुमैः॥ १॥
सौमित्रे पश्य पंपायाः काननं शुभदर्शनम्।
यत्र राजंति शैला वा द्रुमाः सशिखरा इव॥ २॥
सुखानिलोयं सौमित्रे कालः प्रचुरमन्मथः।
गंधवान्सुरभिर्मासो जातपुष्पफलद्रुमः॥ ३॥
पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम्।
सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव॥ ४॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः।
वायुवेगप्रचलिताः पुष्पैरवाकिरंति गाम्॥ ५॥
पतितैः पतमानैश्च पादपस्थैश्च मारुतः।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

द्वितीयावलिः

कुसुमैः पश्य सौमित्रे क्रीडतीव समन्ततः ॥ ६ ॥
विक्षिपन्विविधाः शाखा नगानां कुसुमोत्कटाः ।
मारुतश्चलितस्थानैः षट्पदैरनुगीयते ॥ ७ ॥
गिरिप्रस्थेषु रम्येषु पुष्पवद्भिर्मनोरमैः ।
संसक्तशिखराः शैला विराजंति महाद्रुमैः ॥ ८ ॥
सुपुष्पितांस्तु पश्यैतान्कर्णिकारान्समन्ततः ।
हाटकप्रतिसंछन्नान्नरान्पीताम्बरानिव ॥ ९ ॥
सन्तापयति सौमित्रे क्रूरश्चैत्रवनानिलः ।
अमी मयूराः शोभन्ते प्रनृत्यन्तस्ततस्ततः ॥ १० ॥
पश्य लक्ष्मण संनादं वने मदविवर्धनम् ।
पुष्पिताग्रेषु वृक्षेषु द्विजानामवकूजताम् ॥ ११ ॥
विक्षिप्तां पवनेनैतामसौ तिलकमंजरीम् ।
षट्पदः सहसाभ्येति मदोद्धत्तामिव प्रियाम् ॥ १२ ॥
कामिनामयमत्यन्तमशोकः शोकवर्धनः ।
स्तवकैः पवनोत्क्षिप्तैस्तर्जयन्निव मां स्थितः ॥ १३ ॥
अमी लक्ष्मण दृश्यन्ते चूताः कुसुमशालिनः ।
विभ्रमोत्सिक्तमनसः साङ्गरागा नरा इव ॥ १४ ॥
सौमित्रे पश्य पम्पायाश्चित्रासु वनराजिषु ।
किन्नरा नरशार्दूल विचरान्ति इतस्ततः ॥ १५ ॥
इमानि शुभगन्धीनि पश्य लक्ष्मण सर्वतः ।
नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् ॥ १६ ॥
एषा प्रसन्नसलिला पद्मनीलोत्पलायुता ।
हंसकारण्डवाकीर्णा पम्पा सौगन्धिकायुता ॥ १७ ॥
जले तरुणसूर्याभैः षट्पदाहतकेसरैः ।
पङ्कजैः शोभते पम्पा समन्तादभिसंवृता ॥ १८ ॥
पवनाहतवेगाभिरूर्मिभिर्विमलेऽम्भसि ।
पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ॥ १९ ॥

Ramayana.

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



## X
## THE RIGHTEOUS KING OF THE SIBIS.

अथैकदा वासवश्चाग्निश्च उशीनरं नाम राजानं तत्परीक्षार्थमाजग्मतुः। इन्द्रः श्येनो बभूवाग्निश्च कपोतरूपं धारयामास। कपोतो यज्ञभूमिस्थितं राजानमासाद्य श्येनाच्छरणं याचमानस्तस्योरुप्रदेशे निलिल्ये। तदवलोक्य श्येन उवाच। सर्वे महीक्षितस्त्वां धर्मात्मानमाहुः। क्षुधा पीड्यमानस्य मे भक्षणमिदं धात्रा कल्पितम्। तत्कस्मात्त्वं धर्मविरुद्धं कर्तुमिच्छसि। राजोवाच। भो द्विज त्वत्तस्त्राणार्थी सन्त्रस्तरूपः कपोतो मामभ्यागतः। शरणागताय च तस्मै मयाभयं दत्तम्। श्येनः प्रत्युवाच। राजन् सर्वे जन्तव आहारेण विवर्धते। भोजनमुत्सृज्य केनापि जीवितुं न शक्यम्। यदि भक्ष्याद्वियोजितोहं भवता तर्हि मम प्राणा नियतं कायं त्यक्ष्यन्ति। मयि च मृते पुत्रदारादयः सर्वे विनंक्ष्यंति। एवं कपोतं रक्षमाणस्त्वं बहून् प्राणांस्त्याजयिष्यसि। तदत्र धर्माधर्मनिर्णये गुरुलाघवं निश्चित्य यच्छ्रेयः तत्कुरुष्व। तच्छ्रुत्वा राजा प्राह। विहगोत्तम धर्मसंयुक्तं खलु त्वं भाषसे। किंतु शरणार्थिपरित्यागो न कदापि युक्तः तवाहारोन्यथापि कर्तुं शक्यते। शिबीनामृद्धेऽस्मिन् राज्ये वराहं वा मृगं वा गां वा यत्किंचित्त्वं कामयसे तद्गृहाण। किंतु शरणार्थिनमिमं पक्षिणं मा जहि। तदाकर्ण्य श्येनः प्रोवाच। उशीनर श्येनः कपोतानत्तीत्येषा स्थितिः सनातनी। अयं कपोतश्च मे दैवविहितो भक्षः। तथापि यदि त्वमिममनुकंपसे तर्हि कपोततुलया धृतमात्मनो मांसमुत्कृत्य मह्यं देहि। तनैव मे तुष्टिर्भवेत्। राजा सानन्दं प्राह। अनुग्रहमिमं मन्ये यन्मामभियाचसे तत्तव मनोरथं सम्पादयामि। इत्युक्त्वा राजा देहान्मांसमुत्कृत्य कपोतेन तुलयामास। किंतु कपोतो मांसादत्यरिच्यतेति दृष्ट्वा पुनर्मांसमुत्कृत्य प्राददात्। तथापि कपोततुलया धृतं मांसं यदा नैवाविद्यत तदासौ स्वयमेव तुलामारुरोह। तदवलोक्य श्येन उवाच। भो धर्मज्ञ अहमिंद्रोऽस्मि। अयं कपोतश्च हव्यवाहनः। आवां त्वां जिज्ञासमानौ यज्ञवाटमुपा-

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



गतौ। यत्ते गात्रेभ्यो मांसमुत्कृतं सैषा भास्वती कीर्तिर्लोकानभिभविष्यति। इत्युक्त्वा तावुभौ दिवमारुरुहतुः। उशीनरोपि धर्मेण रोदसी आवृत्य वपुषैव त्रिविष्टपमारुरोह।

Mahabharata.

---

## XI.

## VISHNUSARMAN UNDERTAKING TO INSTRUCT THE PRINCES.

अस्ति भागीरथीतीरे पाटलीपुत्रनामधेयं नगरम्। तत्र सर्वस्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत्। स भूपतिरेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव।

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यंध एव सः ॥ १ ॥
यौवनं धनसंपत्तिः प्रभुत्वमाविवेकिता।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ २ ॥

इत्याकर्ण्यात्मनः पुत्राणामनाधिगतशास्त्राणां नित्यमुन्मार्गगामिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिंतयामास।

कोर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः।
काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् ॥ ३ ॥
अजातमृतमूर्खाणां वरमाद्यौ न चांतिमः।
सकृद्दुःखकरावाद्यावंतिमस्तु पदे पदे ॥ ४ ॥

किं च।

स जातो येन जातेन याति वंशः समुन्नतिम्।
परिवर्तिनि संसारे मृतः को वा न जायते ॥ ५ ॥
अर्थागमो नित्यमरोगिता च।
प्रियश्च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ॥ ६ ॥

तत्कथमिदानीमेते मम पुत्रा गुणवंतः क्रियंताम्।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



अवश्यं भाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकंठस्य महाहिशयनं हरेः ॥ ७ ॥
यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिंताविषघ्नोयमगदः किं न पीयते ॥ ८ ॥
इत्येतत्कार्याक्षमाणां केषांचिदालस्यवचनम् ।
न दैवमपि संचिंत्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन तैलानि तिलेभ्यो नाप्तुमर्हति ॥ ९ ॥

अन्यच्च ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी—
दैवेन देयमिति कापुरुषा वदंति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या ।
यत्ने कृते यदि न सिध्यति कोत्र दोषः ॥ १० ॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ११ ॥

तथा च ।

पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात्पुरुषकारेण यत्नं कुर्यादतंद्रितः ॥ १२ ॥
यथा मृत्पिंडतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ १३ ॥
काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ १४ ॥

एतच्चिंतयित्वा स राजा पंडितसभां कारितवान् । राजोवाच । भो भोः पंडिताः श्रूयताम् । अस्ति कश्चिदेवंभूतो विद्वान्यो मम पुत्राणां नित्यमुन्मार्गगामिनामनधिगतशास्त्राणामिदानीं नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः । यतः

काचः कांचनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ १५ ॥

उक्तं च ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


हीयते हि मतिस्तात हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ १६ ॥

अत्रांतरे विष्णुशर्मनामा महापंडितः सकलनीतिशास्त्रतत्त्वज्ञो बृहस्पतिरिवाब्रवीत् । देव महाकुलसंभूता एते राजपुत्राः । तन्मया नीतिं ग्राहयितुं शक्यंते । यतः

नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत् ।
न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ १७ ॥

अतोहं षण्मासाभ्यंतरे तव पुत्रान्नीतिशास्त्राभिज्ञान्करिष्यामि । राजा सविनयं पुनरुवाच ।

कीटोपि सुमनःसंगादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ १८ ॥

अन्यच्च । यथोदयगिरेर्द्रव्यं संनिकर्षेण दीप्यते ।
तथा सत्संनिधानेन हीनवर्णोपि दीप्यते ॥ १९ ॥

गुणा गुणज्ञेषु गुणा भवंति ।
ते निर्गुणं प्राप्य भवंति दोषाः ।
आस्वाद्यतोयाः प्रभवंति नद्यः
समुद्रमासाद्य भवंत्यपेयाः ॥ २० ॥

तदेतेषामस्मत्पुत्राणां नीतिशास्त्रोपदेशाय भवंतः प्रमाणम् । इत्युक्त्वा तस्य विष्णुशर्मणो बहुमानपुरःसरं पुत्रान्समर्पितवान् ।

Hitopadesa.

---

## XI.

तच्छ्रुत्वा राक्षसेंद्रस्य वाक्यं वाक्यविशारदः ।
प्रत्युवाच महातेजा मारिचो राक्षसेश्वरम् ॥ १ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्यापि पथ्यस्य वक्ता श्रोता च दुर्लभः[1] ॥ २ ॥
न नूनं बुध्यसे रामं महावीर्यगुणोन्नतम् ।
अयुक्तचारश्चपलो महेंद्रवरुणोपमम् ॥ ३ ॥
अपि स्वस्ति भवेत्तात सर्वेषामपि रक्षसाम् ।

CC-0. Gurukul Kangri Collection, Haridwar.

१ अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः । इति पाठान्तरम्

Digitized By Siddhanta eGangotri Gyaan Kosha



अपि रामो न संक्रुद्धः कुर्याल्लोकानराक्षसान् ॥ ४ ॥
अपि ते जीवितांताय नोत्पन्ना जनकात्मजा ।
अपि सीतानिमित्तं च न भवेद्व्यसनं महत् ॥ ५ ॥
अपि त्वामीश्वरं प्राप्य कामवृत्तं निरंकुशम् ।
न विनश्येत्पुरी लंका त्वया सह सराक्षसा ॥ ६ ॥
त्वद्विधः कामवृत्तो हि दुःशीलः पापमंत्रितः ।
आत्मानं स्वजनं राष्ट्रं स राजा हंति दुर्मतिः ॥ ७ ॥
न च पित्रा परित्यक्तो नामर्यादः कथंचन ।
न लुब्धो न च दुःशीलो न च क्षत्रियपांसनः ॥ ८ ॥
न च धर्मगुणैर्हीनः कौसल्यानंदवर्धनः ।
न च तीक्ष्णो हि भूतानां सर्वभूतहिते रतः ॥ ९ ॥
वंचितं पितरं दृष्ट्वा कैकेय्या सत्यवादिनम् ।
करिष्यामीति धर्मात्मा ततः प्रव्रजितो वनम् ॥ १० ॥
कैकेय्याः प्रियकामार्थं पितुर्दशरथस्य च ।
हित्वा राज्यं च भोगांश्च प्रविष्टो दंडकावनम् ॥ ११ ॥
रामो विग्रहवान्धर्मः साधुः सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानामिव वासवः ॥ १२ ॥
कथं नु तस्य वैदेहीं रक्षितां स्वेन तेजसा ।
इच्छसे प्रसभं हर्तुं प्रभामिव विवस्वतः ॥ १३ ॥
शरार्चिषमनाधृष्यं चापखड्गेंधनं रणे ।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ १४ ॥
अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ १५ ॥
तस्य वै नरसिंहस्य सिंहोरस्कस्य भामिनी ।
प्राणेभ्योपि प्रियतरा भार्या नित्यमनुव्रता ॥ १६ ॥
न सा धर्षयितुं शक्या मैथिल्योजास्विनः प्रिया ।
दीप्तस्येव हुताशस्य शिखा सीता सुमध्यमा ॥ १७ ॥
किमुद्यमं व्यर्थमिमं कृत्वा ते

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


दृष्टश्चेत्त्वं रणे तेन तदंतमुपजीवितम् ॥ १८ ॥
आत्मनश्च बलं ज्ञात्वा राघवस्य च तत्त्वतः ।
हितं हि तव निश्चित्य क्षमं त्वं कर्तुमर्हसि ॥ १९ ॥
अहं तु मन्ये तव न क्षमं रणे ।
समागमं कोसलराजसूनुना ।
इदं हि भूयः शृणु वाक्यमुत्तमं
क्षमं च युक्तं च निशाचराधिप ॥ २० ॥

Ramayana.

---

## XII
## KING BHOJA AND A LEARNED BRAHMANA.

ततो मुंजे तपोवनं याते बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भोजराजभूपतिः । एवमतिक्रामति काले कदाचिद्राज्ञा क्रीडतोद्यानं गच्छता कोपि धारानगरवासी विप्रो लक्षितः । स च राजानं वीक्ष्य नेत्रे निमील्यागच्छन् राज्ञा पृष्टः । द्विज त्वं मां दृष्टा न स्वस्तीति जल्पसि । विशेषेण लोचने निमीलयसि । तत्र को हेतुरिति । विप्र आह । देव त्वं वैष्णवोसि । विप्राणां नोपद्रवं करिष्यसि । ततस्त्वत्तो न भीतिः । किंतु कस्मैचित् किमपि न प्रयच्छसि । तेन तव दाक्षिण्यमपि नास्ति । अतस्ते किमाशीर्वचसा । किं च प्रातरेव कृपणमुखावलोकनात्परतोपि लाभहानिः स्यादिति लोकोक्त्या लोचने निमीलिते ।

अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् ।
यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ १ ॥

देव मत्पिता वृद्धः काशीं प्रति गच्छन् मया पृष्टः ।
तात मया किं कर्तव्यमिति । पित्रा चेत्थमभ्यधायि ।

पातकानां समस्तानां द्वे परे तात पातके ।
एकं दुःखनिवो राजा द्वितीयं च तदाश्रयः ॥ २ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



अदातुर्दाक्षिण्यं न हि भवति। देव पुरा कर्णदधीचिशिबिविक्रमप्रमुखाः क्षितिपतयो यथा निजदानसमुद्भूतदिव्यनवगुणैर्निवसंति महीमंडले तथा किमपरे राजानः।

देहे पतिनि का रक्षा यशो रक्ष्यमपातवत्।
नरः पतितकायोपि यशःकायेन जीवति ॥ ३ ॥

राजापि तेन वाक्येन पीयूषपूरस्नात इव परब्रह्मणि लीन इव लोचनाभ्यां हर्षाश्रूणि मुमोच। प्राह च द्विजम्।

विप्रवर शृणु।
मनीषिणः संति न ते हितैषिणो
हितैषिणः संति न ते मनीषिणः।
सुहृच्च विद्वानपि दुर्लभो नृणां
यथौषधं स्वादु हितं च दुर्लभम् ॥ ४ ॥

इति विप्राय लक्षं दत्त्वा किं ते नामेत्याह। विप्रः स्वनाम भूमौ लिखिति गोविंद इति। राजा वाचयित्वा विप्र प्रत्यहं राजभवनमागंतव्यं न ते कश्चिनिषेधो विद्वांसः कवयश्च कौतुकात् सभामानेतव्या इति प्रत्युवाच।

Bhojaprabandha.

---

## XIV

## RATI'S LAMENTATION AFTFR CUPID IS BURNT BY SIVA.

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥ १ ॥
अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥
अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ३ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


अथ सा पुनरेव विह्वला वसुधालिंगनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥
उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥
क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबंधनो जलसंघात इवासि विद्रुतः ॥ ६ ॥
कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७ ॥
स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बंधनम् ।
च्युतकेसरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥ ८ ॥
हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनंगः कथमक्षता रतिः ॥ ९ ॥
परलोकनववासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वंचितस्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥
रजनीतिमिरावगुंठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रियकामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥
नयनान्यरुणानि घूर्णयन् वचनानि स्खलयन्पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडंबना ॥ १२ ॥
अवगम्य कथीकृतं वपुः प्रियबंधोस्तव निष्फलोदयः ।
बहुलेपि गते निशाकरस्तनुतां दुःखमनंग मोक्ष्यति ॥ १३ ॥
हरितारुणचारुबंधनः कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥ १४ ॥
अलिपंक्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदितीव माम् ॥ १५ ॥
प्रतिपद्य मनोहरं वपुः पुनराप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिला मधुरालापनिसर्गपंडिताम् ॥ १६ ॥
शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहःस्मर संस्मृत्य न शांतिरस्ति मे ॥ १७ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



रचितं रतिपंडित त्वया स्वयंमगेषु ममेदर्मातवम् ।
ध्रियेत कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥
विबुधैरासि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ १९ ॥
अहमेत्य पतंगवर्त्मना पुनरंकाश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥ २० ॥
मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितीति मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥ २१ ॥
क्रियतां कथमंत्यमंडनं परलोकांतरितस्य ते मया ।
सममेव गतोस्यतार्किता गतिमंगेन च जीवितेन च ॥ २२ ॥
ऋजुतां नयतः स्मरामि ते शरमुत्संगनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां नयनोपांतविलोकितं च यत् ॥ २३ ॥
क नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोपि सुहृद्गतां गतिम् ॥ २४ ॥
अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥
तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥
इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥ २७ ॥
अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥
अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।
बिसतंतुगुणस्य कारितं धनुषः पेलवपुष्पपत्रिणः ॥ २९ ॥
गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम् ॥ ३० ॥
विधिना कृतमर्धवैशसं ननु मां कामवधे विमुंचता ।
अनपायिनी संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥ ३१ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


तदिदं क्रियतामनंतरं भवता बंधुजनप्रयोजनम्।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरंतिकम्॥ ३२॥
शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥ ३३॥
अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ॥ ३४॥
कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः।
कुरु संप्रति तावदाशु मे प्रणिपातांजलियाचिताश्चिताम्॥ ३५॥
तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना॥ ३३॥
इति चापि विधाय दीयतां सलिलस्यांजलिरेक एव नौ।
अविभज्य परत्र तं मया सहितः पास्यति ते स बांधवः॥ ३७॥
परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः।
निवपेः सहकारमंजरी प्रियचूतप्रसवो हि ते सखा॥ ३८॥

Kumarasambhava IV.

---

## XV.

## THE EVILS OF POVERTY.

शीलं शौचं क्षांतिर्दाक्षिण्यं कुले जन्म सर्वाणीमानि वित्तविहीनस्य पुरुषस्य न विराजंते। यदा पुरुषो वित्तविहीनो भवति तदा मानो वा दर्पो वा विज्ञानं वा विभ्रमो वा सर्वं प्रणश्यति। बुद्धिमतामपि बुद्धिर्वसंतवाताहता शिशिरश्रीरिव प्रतिदिवसं कुटुंबभरचिंतया लयं याति। शुष्कं सर इव रौद्रं स्मशानमिव रूक्षं भवति। वित्ताविहीना लघवो नराः पुरो निवसंतोपि पयसि जातविनष्टाः पयसां बुद्बुदा इव न विभाव्यंते। सुकुलं कुशलं सुजनं च विहाय कुलकुशलशीलविकलेपि कल्पतराविवाढ्ये नरे जननिवहा नित्यं रज्यंति। पूर्वसुकृतमिह विकलं खलु। कुलसमुद्भूता विद्यावंतोपि यस्य यदा विभवः स्यात्तस्य तदा दासतां यांति।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


कामं गर्जतमपि पयसां पतिमयं लघुरिति लोको न वदति । तथा हि यत्परिपूर्णा नरा इव कुर्वंति तत्सर्वमलज्जाकरं गण्यते ।

Panchatantra V.

---

## XVI.

## MISCELLANEOUS VERSES PART I.

सद्भिः संबोध्यमानोपि दुरात्मा पापपौरुषः ।
घृष्यमाण इवांगारो निर्मलत्वं न गच्छति ॥ १ ॥
वरं पर्वतदुर्गेषु भ्रांतं वनचरैः सह ।
न मूर्खजनसंसर्गः सुरेंद्रभवनेष्वपि ॥ २ ॥
कलहांतानि हर्म्याणि कुवाक्यांतं च सौहृदम् ।
कुराजांतानि राष्ट्राणि कुकर्मांतं यशो नृणाम् ॥ ३ ॥
पूज्यते यदपूज्योपि यदगम्योपि गम्यते ।
वंद्यते यदवंद्योपि स प्रभावो धनस्य च ॥ ४ ॥
गतवयसामपि पुंसां येषामर्था भवंति ते तरुणाः ।
अर्थेन तु ये हीना वृद्धास्ते यौवनेपि स्युः ॥ ५ ॥
अप्रकटीकृतशक्तिः शक्तोपि जनास्तिरस्क्रियां लभते ।
निवसन्नंतर्दारुणि लंघ्यो वन्हिर्न तु ज्वलितः ॥ ६ ॥
उदीरितोर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहंति चोदितः ।
अनुक्तमप्यूहति पंडितो जनः
परेंगितज्ञानफला हि बुद्धयः ॥ ७ ॥
अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः ।
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८ ॥
शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ ९ ॥
प्रारभ्यते न खलु विघ्नभयेन नचैः
प्रारभ्य विघ्नविहता विरमंति मध्याः ।

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha


विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजंति ॥ १० ॥
मदोन्मत्तस्य भूपस्य कुंजरस्य च गच्छतः।
उन्मार्गं वाच्यतां यांति महामात्राः समीपगाः॥ ११॥
पूर्वे वयसि यः शांतः स शांत इति मे मतिः।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ १२ ॥
स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहोसुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥ १३ ॥
तृणानि नोन्मूलयति प्रभंजनो
मृदूनि नीचैः प्रणतानि सर्वतः।
स्वभाव एवोन्नतचेतसामयं
महान्महत्स्वेव करोति विक्रमम् ॥ १४ ॥
नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेंद्रैः।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ १५ ॥
स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ १६ ॥
साम्नैव यत्र सिद्धिर्न तत्र दंडो बुधेन विनियोज्यः।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥ १७॥
अप्यात्मनो विनाशं गणयति न खलः परव्यसनतिष्ठः।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबंधः॥ १८ ॥
संतप्तायासि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।
स्वात्यां सागरशुक्तिमध्यपतितं सन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥ १९॥
अपि संपूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः।
नदीशः परिपूर्णोऽपि चंद्रोदयमपेक्षते ॥ २० ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



सिंहो व्याकरणस्य कर्तुरहरत्प्राणान् प्रियान् पाणिने-
र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् ।
छंदोज्ञाननिधिं जघान मकरो वेलातटे पिंगल-
मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ २१ ॥
उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवांभसाम् ।
प्राप्ते भये परित्राणं प्रीतिविश्रंभभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २३ ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम्
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ २४ ॥
बलीयसा हीनबलो विरोधं न भूतिकामो मनसापि वांछेत् ।
न वध्यते वेतसवृत्तिरत्र व्यक्तं प्रणाशो हि पतंगवृत्तेः ॥ २५ ॥

---

## XVII

## MISCELLANEOUS VERSES PART II.

लोभाविष्टो नरो वित्तं वीक्षते न स्वमापदम् ।
दुग्धं पश्यति मार्जारो यतो न लकुटाहितम् ॥ २६ ॥
गात्रं संकुचितं गतिर्विगलिता दंताश्च नाशं गता-
श्चक्षुर्भ्राम्यति रूपमेव ह्रसते वक्त्रं च लालायते ।
वाक्यं नैव करोति बांधवजनः पत्नी न शुश्रूषते ।
हा कष्टं जरयाभिभूतपुरुषः पुत्रैरवज्ञायते ॥ २७ ॥
जीर्यंते जीर्यतः केशा दंता जीर्यंति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्यंते तृष्णैका तरुणायते ॥ २८ ॥
इच्छति शती सहस्रं सहस्री लक्षमीहते ।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ २९ ॥
लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्शशविषाणमासादये-

CC-0. Gurukul Kangri Collection, Haridwar.

१. पतनम्.

Digitized By Siddhanta eGangotri Gyaan Kosha


न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३० ॥
पीयूषमिव संतोषं पिबतां निर्वृतिः परा ।
दुःखं निरंतरं पुंसामसंतोषवतां सदा ॥ ३१ ॥
यदचेतनोपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकांतः ।
तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ ३२ ॥
सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३३ ॥
एते सत्पुरुषाः परार्थघटकाः स्वार्थान् परित्यज्य ये ।
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेमी मानवराक्षसाः परहितं स्वार्थाय निघ्नंति ये
ये तु घ्नंति निरर्थकं परहितं ते के न जानीमहे ॥ ३४ ॥
एक एव खगो मानी चिरं जीवतु चातकः ।
म्रियते वा पिपासायां याचते वा पुरंदरम् ॥ ३५ ॥
पिबंति मधु पद्मेषु भृंगाः केसरधूसराः ।
हंसाः शैवालमश्नंति धिग्दैवमसमंजसम् ॥ ३६ ॥
उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षडेते यत्र वर्तंते तत्र देव सहायकृत् ॥ ३७ ॥
शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते वदति न साधुः करोत्येव ॥ ३८ ॥
अंजलिस्थानि पुष्पाणि वासयंति करद्वयम् ।
अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ ३९ ॥
किमत्र चित्रं यत्संतः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायंते चंदनद्रुमाः ॥ ४० ॥
भवंति नम्रास्तरवः फलागमैर्नवांबुभिर्भूरि विलंबिनो घनाः ।
अनुद्धताःसत्पुरुषाःसमृद्धिभिःस्वभावएवैष परोपकारिणाम्॥४१॥
जाड्यं धियो हरति सिंचति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।


CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha



चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥ ४२ ॥
शक्यो वारयितुं जलेन हुतभुक छत्रेण सूर्यातपो
नागेंद्रो निशितांकुशेन समदो दंडेन गोगर्दभौ ।
व्याधिर्भैषजसंग्रहैश्च विविधैर्मंत्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥४३॥
यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ ४४ ॥
विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतद् ज्ञानाय दानाय च रक्षणाय ॥४५॥
खलः करोति दुर्वृत्तं तद्धि फलति साधुषु ।
दशाननोहरत्सीतां बंधनं च पयोदधेः ॥ ४६ ॥
यदि संति गुणाः पुंसां विकसंत्येव केवलम् ।
न हि कस्तूरिकामोदः शपथेनानुभाव्यते ॥ ४७ ॥
मातेव रक्षति पितेव हिते नियुंक्ते
कांतेव चापि रमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या ॥ ४८ ॥
आश्रयवशेन सततं गुरुता लघुता च जायते पुंसाम् ।
विंध्ये विंध्यसमानाः करिणो बत दर्पणे लघवः ॥ ४९ ॥
अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि ।
गणयति न तिरस्कारं दानांधविलोचनो नीचः ॥ ५० ॥
पद्माकरं दिनकरो विकचीकरोति
चंद्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोपि जलं ददाति
संतः स्वयं परहितेषु कृताभियोगाः ॥ ५१ ॥

CC-0. Gurukul Kangri Collection, Haridwar.

Digitized By Siddhanta eGangotri Gyaan Kosha

# EXPLANATORY NOTES.

——:O:——

## FIRST SERIES.

### I.

परं मित्रभावमुपगताः being on terms of great friendship. शास्त्रपराङ्मुखः 'averse to learning,' येन–यदि. पूर्वदेशं the eastern country,' the East. किञ्चिन्मार्गम् some distance. राजप्रतिग्रहः royal favour or gifts from a king. संविभागी भाविष्यति will share in, be a sharer of, विद्याप्रत्यय· a test of (our) learning. अंस्थिसंचय 'bringing or putting together of bones' संचारयति puts in or infuses. एष सिंहो निष्पाद्यते it is a lion that is being created or revived. उत्तमा better than, superior to; सिंहकारकाः makers or revivers of the lion.'

### II.

सर्वशास्त्रतत्वज्ञः 'knowing or versed in the principles of all the Sastras (sciences).' संस्कारार्थं 'for burning (it).' इत्येव काले 'Just at that time,' here तं refers to कुमारं understood. मनोहरकलेवरम् 'having a lovely form.' योगेन by means of Yoga (deep and abstract meditation). सुप्तोत्थिते-आदौ सुप्तः पश्चादुत्थितः—तस्मिन् risen from his sleep (of death.) परां प्रीतिं &c. 'became greatly delighted.' प्राप्तजीवन being revived, having come to life again. कथं why, for what purpose (this question is asked by the Vetala) सर्वगुणाधार the abode of (*i. e.* possessed of) all good qualities. प्राप्तव्य was to be obtained.

CC-0. Gurukul Kangri Collection, Haridwar.

